| सास्वादने | ५ | ९ | २ | २४ | ४५ | १ | ५ | ९१ |
|---|---|---|---|---|---|---|---|---|
| मिश्रे | ५ | ६ | २ | १९ | ३२ | १ | ५ | ७० |
| अविरते | ५ | ६ | २ | २१ | ३२ | १ | ५ | ७२ |

प्रतिग्रहस्थानानि मोहनीयवर्जाना सप्ताना कर्मणा सर्वत्र बन्धस्थानवद्वाच्यानि । मोहनीयस्य प्रतिग्रहस्थानानि चत्वारि भवन्ति, तद्यथा—द्वाविंशतिरेकविंशतिरेकोनविंशति सप्तदशेति । तत्र मिथ्यादृष्टावष्टाविंशतिसत्ताकस्य सप्तविंशतिसत्ताकस्य वा द्वाविंशतिप्रकृतीना प्रतिग्रहस्थान, उद्वलितसम्यक्त्वमिश्रयोरनादिमिथ्यादृष्टेर्वा षड्विंशतिसत्ताकस्य मिथ्यादृष्टौ त्वेकविंशतिप्रकृतिरूप पतद्ग्रहस्थानम्, तथा सास्वादनेऽष्टाविंशतिसत्ताकस्याप्येकविंशतिप्रकृतिरूप प्रतिग्रहस्थानम्, मिश्रगुणस्थाने सप्तदशप्रकृतिरूप प्रतिग्रहस्थान भवति । यद्वा क्षायिकसम्यग्दृष्टे सप्तदशप्रकृतिरूप प्रतिग्रहस्थान भवति । इद प्रतिग्रहस्थानं रत्नप्रभा विहाय नान्यासु पृथिवीषु भवति, यतो रत्नप्रभायामेव क्षायिकसम्यग्दृष्टिरुत्पद्यते न शेषासु, तदुक्त पञ्चसग्रहवृत्तौ श्रीमलयगिरिपादै —"तिर्यङ्मनुष्यो वा ससम्यक्त्वो द्वितीयादिषु नरकपृथिवीषु न गच्छति नापि तत आगच्छति" इति । मतान्तरेण क्षायिकसम्यग्दृष्टिस्तृतीयस्यामपि गच्छति, तन्मते रत्नप्रभात्रिके सप्तदशप्रकृतिरूप प्रतिग्रहस्थान भवति, तदुक्त तन्मतेन—"क्षायिकसम्यग्दृष्टयस्तृतीयस्यामपि नरकपृथिव्या गच्छन्ति" इति । जिवाहमज्ञप्त्यभिप्रायेण यद्यपि ससम्यक्त्व षष्ठनरकपृथिवीं यावद्गच्छति, तदुक्त मलयगिरिपादै पञ्चसग्रहवृत्तौ—"नरतिरश्चामन्यतरोऽविरतसम्यग्दृष्टि पूर्वबद्धायुः क्षायोपशमिकसम्यक्त्वेन गृहीतेन व्याख्याप्रज्ञप्त्याद्यभिप्रायत षष्ठनरकपृथिव्यामपि नारकत्वेनोत्पद्यते । ततो पोद्धृत्य क्षायोपशमिकसम्यक्त्वयानन्न मनुष्येषु मध्ये समुत्पद्यते" इति, तथापि तत्र सम्यग्दृष्टे सप्तदशप्रकृतिरूप प्रतिग्रहस्थान न भवति, यत क्षायिकसम्यग्दृष्टिस्तत्र न गच्छति । अविरत सम्यग्दृष्टावौपशमिकसम्यग्दृष्टे क्षायोपशमिकसम्यग्दृष्टेर्वैकोनविंशतिप्रकृतिरूप प्रतिग्रहस्थान भवति । नात्र प्रतिग्रहस्थानानि भङ्गास्तद्यन्त्राणि च बन्धस्थानभङ्गयन्त्रवद्वाच्यानि । अत पर प्रायेण प्रतिग्रहप्रकृतीन् मोहनीयस्य प्रतिग्रहस्थानानि च वक्ष्यामो न शेषमिति ।

॥ नरकगतौ मोहस्य प्रति० स्थानयन्त्रम् ॥

| प्रति० स्था० | २२ | २१ | १९ | १७ |
|---|---|---|---|---|
| ओघे | ,, | ,, | ,, | ,, |
| मिथ्यात्वे | ,, | ,, | ० | ० |
| सास्वादने | ० | ,, | ० | ० |
| मिश्रे | ० | ० | ० | ,, |
| अविरते | ० | ० | ,, | ,, |

अविरते १७ रत्नप्रभायाम्, न मतान्तरेणाद्यत्रिके, न शेषासु ।

अथ तिर्यग्गतौ पतद्ग्रहप्रकृतय उच्यन्ते—तत्र सामान्येन तिर्यग्गतौ पञ्चदशाग्रशत प्रतिग्रहे भवति, जिनाहारकद्विकायुश्चतुष्करूपाणा प्रतिग्रहाभावात् । मिथ्यात्वे सम्यक्त्वमिश्रवर्जा शेषा त्रयोदशाग्रशत पतद्ग्रहे प्राप्यते । सास्वादनसम्यग्दृष्टौ नरकद्विकस्थावरजातिचतुष्कातपहुण्डसेवार्त्तनपुसकमिथ्यात्ववर्जा शेषा अष्टानवतिः प्राप्यते । मिश्रे बन्धो

फकोनसप्ततिः प्रतिग्रहे भवति । अविरतसम्यग्दृष्टौ सैवैकोनसप्ततिः सम्यग्मिथ्यात्वयुतै- कसप्ततिर्भवति । देशविरते सैवैकसप्ततिरप्रत्याख्यानचतुष्कविहीना सप्तषष्टिः प्रतिग्रहे प्राप्यते । अपर्याप्ततिर्यग्गतौ सामान्येन मिथ्यादृष्टौ च सप्ताग्रशतं प्रतिग्रहे प्राप्यते, आयु- श्चतुष्कजिनाहारकद्विकवैक्रियद्विकसुरद्विकनरकद्विकसम्यक्त्वमिश्ररूपाणां पञ्चदशप्रकृती- नामप्राप्यमाणत्वात् ।

॥ पर्याप्ततिर्यग्गतौ प्रतिग्रहप्रकृतियन्त्रम् ॥

| गुणस्था० | ज्ञानाव० | दर्शना० | वेदनीय | मोहनीय | आयु | नाम | गोत्र | अन्तराय | सर्वाग्रम् |
|---|---|---|---|---|---|---|---|---|---|
| ओघे | ५ | ९ | २ | २८ | ० | ६४ | २ | ५ | ११५ |
| मिथ्यात्वे | ५ | ९ | २ | २६ | ० | ६४ | २ | ५ | ११३ |
| सास्वादने | ५ | ९ | २ | २४ | ० | ५१ | २ | ५ | ९८ |
| मिश्रे | ५ | ६ | २ | १९ | ० | ३१ | १ | ५ | ६९ |
| अविरते | ५ | ६ | २ | २१ | ० | ३१ | १ | ५ | ७१ |
| देशविरते | ५ | ६ | २ | १७ | ० | ३१ | १ | ५ | ६७ |

॥ अपर्याप्ततिर्यग्गतौ प्रतिग्रहप्रकृतियन्त्रम् ॥

| गुणस्था० | ज्ञाना० | दर्शना० | वेदनीय | मोहनीय | आयु | नाम | गोत्र | अन्तराय | सर्वाग्रम् |
|---|---|---|---|---|---|---|---|---|---|
| ओघे | ५ | ९ | २ | २६ | ० | ५८ | २ | ५ | १०७ |
| मिथ्यात्वे | ५ | ९ | २ | २६ | ० | ५८ | २ | ५ | १०७ |

मोहनीयस्य पञ्च प्रतिग्रहस्थानानि भवन्ति, तद्यथा—द्वाविंशतिरेकविंशतिरेकोनविंशतिः सप्तदश पञ्चदशेति । तत्र द्वाविंशतिः सम्यक्त्वमिश्रवतां मिथ्यादृशामेकविंशतिरुद्वलितस म्यक्त्वमिश्रवतां मिथ्यादृशां भवति, अष्टाविंशतिसत्ताकानां सासादनसम्यग्दृशां त्वेकविं- शतिः भवति । मिश्रदृष्टीनां सप्तदशप्रकृतिरूपं प्रतिग्रहस्थानं भवति । एकोनविंशतिरूपम- विरतसम्यग्दृशामुपशमसम्यग्दृशां वेदकसम्यग्दृष्टीनां वा भवति । सप्तदशप्रकृतिरूपं तु प्रति- ग्रहस्थानं क्षायिकसम्यक्त्ववतां युगलिकतिरश्चां भवति । देशविरतौ पञ्चदशप्रकृतिरूपं प्रति- ग्रहस्थानमौपशमिकसम्यग्दृष्टीनां वेदकसम्यग्दृष्टीनां वा भवति । त्रयोदशप्रकृतिरूपं तु प्रति- ग्रहस्थानं देशविरतानां तिरश्चां न भवत्येव, क्षायिकसम्यक्त्ववतां सख्यातवर्षायुष्केषु तिर्य-

ष्वनुत्पादादिति । अपर्याप्तस्तिरश्चां द्वाविंशतिप्रकृतिरूपमुद्वलितमिश्रसम्यक्त्ववतामनादि-मिथ्यादृशां चैकविंशतिप्रकृतिरूपं च प्रतिग्रहस्थानं भवतीति ।

॥ पर्याप्ततिर्यग्गतौ मोहस्य प्र० यन्त्रम् ॥

| प्रति० स्था० | २२ | २१ | १९ | १७ | १५ |
|---|---|---|---|---|---|
| ओघे | ॥ | ॥ | ॥ | ॥ | ॥ |
| मिथ्यादृष्टौ | ॥ | ॥ | ० | ० | ० |
| सास्वादने | ० | ॥ | ० | ० | ० |
| मिश्र | ० | ० | ० | ॥ | ० |
| अविरते | ० | ० | ॥ | ॥ | ० |
| देशविरते | ० | ० | ० | ० | ॥ |

॥ अपर्याप्ततिर्यग्गतौ प्रति० स्थानयन्त्रम् ॥

| प्रतिग्रहस्थाने | २२ | २१ |
|---|---|---|
| ओघे, मि० च | ॥ | । |

तथा मनुजगतौ प्रतिग्रहप्रकृतय उच्यन्ते—तत्र सामान्येनायुश्चतुष्कवर्जमष्टादशाप्रशतं प्रतिग्रहे प्राप्यते, मिथ्यादृष्टिगुणस्थाने जिनाहारकद्विकमिश्रसम्यक्त्ववर्जमष्टादशाप्रशतमेव त्रयोदशाप्रशतं प्रतिग्रहे प्राप्यते । सास्वादने नरकद्विकस्थावरचतुष्कजातिचतुष्कातपहुण्डसेवार्तमिथ्यात्वनपुंसकवर्जं त्रयोदशाग्रशतमेवाष्टनवति प्रकृतयः प्रतिग्रहे भवन्ति । मिश्रे तिर्यग्द्विकदौर्भाग्यत्रिकाद्यसंहननपञ्चकमध्याकृत्युद्योताप्रशस्तखगतिमनुजद्विकौदारिकद्विकस्त्यानर्द्धित्रिकानन्तानुबन्धिचतुष्कस्त्रीवेदनीचगोत्ररूपैकोनत्रिंशद्वर्जाष्टानवतिरेवैकोनसप्तति प्रतिग्रहे प्राप्यते । अविरतसम्यग्दृष्टौ सैवैकोनसप्ततिः जिनसम्यक्त्वमिश्रयुता द्वासप्तति प्रतिग्रहे प्राप्यते । देशविरतावप्रत्याख्यानकषायचतुष्कवर्जा द्वासप्ततिरेवाष्टषष्टि प्रतिग्रहे प्राप्यते । प्रमत्तगुणस्थाने प्रत्याख्यानकषायचतुष्कवर्जाष्टषष्टि चतुष्षष्टि भवति । अरतिशोकास्थिराशुभायशःकीर्त्तिवर्जाहारकद्विकयुता षष्टिरप्रमत्ते प्राप्यते । अपूर्वकरणप्रथमभागेऽपि सा एव षष्टि भवति । अपूर्वकरणद्वितीयादिभागपञ्चके निद्राद्विकवर्जा षष्टिरष्टपञ्चाशद्भवति । सुरद्विकपञ्चाक्षवैक्रियाहारकद्विकाद्यसंस्थानाप्रशस्तखगतिपराघातोच्छ्वासजिनत्रसनवकनामध्रुवबन्धिनवकवर्जाष्टपञ्चाशदेवाष्टाविंशतिरपूर्वकरणसप्तमभागे भवति । हास्यरतिभयजुगुप्साचतुष्कवर्जाष्टाविंशतिरेव चतुर्विंशतिरनिवृत्तिप्रथमभागे भवति । अनिवृत्तिद्वितीयभागे पुनर्वर्जा चतुर्विंशतिरेव त्रयोविंशतिर्भवति । सैवानिवृत्तितृतीयभागे सञ्ज्वलनक्रोधवर्जा द्वाविंशतिर्भवति । चतुर्थभागे सञ्ज्वलनमानवर्जैकोनविंशतिर्भवति । पञ्चमभागे मायावर्जैकोनविंशतिरेव विंशतिर्भवति । सञ्ज्वलनलोभवर्जा विंशतिरेवैकोनविंशति सूक्ष्मसम्पराये भवति । उपशान्तेऽसातवेदनीयज्ञानावरणपञ्चान्तरायपञ्चदर्शनावरणचतुष्कोच्चगोत्रयशःकीर्तिरूपसप्तदशवर्जैकोनविंशतिरेव द्वे प्रकृती पतद्ग्रहे भवत इति । अपर्याप्तमनुजगतौ सामान्ये मिथ्यात्वे चायुश्चतुष्कजिनाहारकद्विकदेवद्विकवैक्रियद्विकनरकद्विकसम्यक्त्वमिश्ररूपाणामप्राप्यमाणत्वात् सप्तप्रशतं प्रतिग्रहे प्राप्यते इति ।

॥ पर्याप्तमनुगतौ प्रतिग्रहप्रकृतियन्त्रम् ॥

| गुणस्था० | ज्ञाना० | दर्शना० | वेदनीय | मोहनीय | नाम | गोत्र | अन्तराय | सर्वाग्रम् |
|---|---|---|---|---|---|---|---|---|
| ओघे | ५ | ९ | २ | २८ | ६७ | २ | ५ | ११८ |
| मिथ्यात्वे | ५ | ९ | २ | २६ | ६४ | २ | ५ | ११३ |
| सास्वादने | ५ | ९ | २ | २४ | ५१ | २ | ५ | ९८ |
| मिश्रे | ५ | ६ | २ | १९ | ३१ | १ | ५ | ६९ |
| अविरते | ५ | ६ | २ | २१ | ३२ | १ | ५ | ७२ |
| देशविरते | ५ | ६ | २ | १७ | ३२ | १ | ५ | ६८ |
| प्रमत्ते | ५ | ६ | २ | १३ | ३२ | १ | ५ | ६४ |
| अप्र०अपू० १ च | ५ | ६ | १ | ११ | ३१ | १ | ५ | ६० |
| अपू० २-६ | ५ | ४ | १ | ११ | ३१ | १ | ५ | ५८ |
| अपू० ७ मे | ५ | ४ | १ | ११ | १ | १ | ५ | २८ |
| अनि० प्र० | ५ | ४ | १ | ७ | १ | १ | ५ | २४ |
| अनि० द्वि० | ५ | ४ | १ | ६ | १ | १ | ५ | २३ |
| अनि० तृ० | ५ | ४ | १ | ५ | १ | १ | ५ | २२ |
| अनि० च० | ५ | ४ | १ | ४ | १ | १ | ५ | २१ |
| अनि० प० | ५ | ४ | १ | ३ | १ | १ | ५ | २० |
| सूक्ष्म० | ५ | ४ | १ | २ | १ | १ | ५ | १९ |
| उपशान्ते | ० | ० | ० | २ | ० | ० | ० | २ |

॥ अपर्याप्तमनुजगतौ प्रतिग्रहप्रकृतियन्त्रम् ॥

| गुणस्था० | ज्ञाना० | दर्शना० | वेदनीय | मोहनीय | नाम | गोत्र | अन्तराय | सर्वाग्रम् |
|---|---|---|---|---|---|---|---|---|
| ओघे०मि० च | ५ | ९ | २ | २६ | ५८ | २ | ५ | १०७ |

अथ मनुजगतौ मोहनीयस्य प्रतिग्रहस्थानान्यष्टादश भवन्ति, तद्यथा-द्वाविंशतिरेक-विंशतिरेकोनविंशतिरष्टादश सप्तदश पञ्चदश चतुर्दश त्रयोदशैकादश दश नव सप्त षट् पञ्च चतुस्त्रीणि द्वे एक चेति। तत्र मिथ्यादृष्टौ षोडशकषायहास्याद्यन्यतरयुगलभयजुगुप्सान्यतमवेदमिथ्यात्वरूपद्वाविंशतिप्रकृतिरूपं प्रतिग्रहस्थानं भवति। अनादिमिथ्यादृष्टेरुद्वलितसम्यक्त्वमिश्रस्य मिथ्यादृष्टेर्वा सास्वादनस्य च मिथ्यात्ववर्जं द्वाविंशतिप्रतिग्रहस्थानमेवैकविंशतिप्रकृतिरूपं प्रतिग्रहस्थानं भवति। अनन्तानुबन्धिचतुष्कवर्जमेकविंशतिप्रकृतिरूपमेव मिश्रे अविरतसम्यग्दृष्टौ क्षायिकसम्यग्दृष्टेश्च सप्तदशप्रकृतिरूपं प्रतिग्रहस्थानं भवति। तदेव मिश्रसम्यक्त्वयुतमेकोनविंशतिप्रकृतिरूपं प्रतिग्रहस्थानमविरतसम्यग्दृष्टावौपशमिकसम्यग्दृष्टेर्वेदकसम्यग्दृष्टेर्वा भवति। अविरतसम्यग्दृष्टावेव मिथ्यात्वे क्षीणे वेदकसम्यग्दृष्टेर्मिश्रव्यतिरिक्तमेकोनविंशतिप्रकृतिरूपमेवाष्टादशप्रकृतिरूपं भवति। देशविरतावविरतसम्यग्दृष्टिसत्कानि त्रीण्यप्यप्रत्याख्यानकषायविहीनानि त्रयोदशचतुर्दशपञ्चदशप्रकृतिरूपाणि त्रीणि भवन्ति। प्रमत्तादित्रिके प्रत्याख्यानकषायविहीनानि देशविरतोक्तानि एकादशदशनवरूपाणि त्रीणि भवन्ति। अनिवृत्तिकरणे शेषाण्येकादीनि सप्तपर्यन्तानि सप्त भवन्ति। तत्र सञ्ज्वलनचतुष्कपुंवेदमिश्रसम्यक्त्वरूपं सप्तप्रकृत्यात्मकम्, सञ्ज्वलनचतुष्कमिश्रसम्यक्त्वरूपं षट्प्रकृत्यात्मकम्, सञ्ज्वलनमानमायालोभमिश्रसम्यक्त्वरूपं यद्वा सञ्ज्वलनचतुष्कपुंवेदरूपं वा पञ्चप्रकृत्यात्मकम्, सञ्ज्वलनमायालोभमिश्रसम्यक्त्वरूपं सञ्ज्वलनचतुष्करूपं वा चतुष्प्रकृत्यात्मकम्, लोभमिश्रसम्यक्त्वरूपं सञ्ज्वलनमानमायालोभरूपं वा त्रिप्रकृत्यात्मकम्, मायालोभरूपं मिश्रसम्यक्त्वरूपं वा द्विप्रकृतिरूपम्, लोभरूपं चैकप्रकृत्यात्मकं प्रतिग्रहस्थानं भवति। मिश्रसम्यक्त्वरूपं केवलं द्विप्रकृत्यात्मकं प्रतिग्रहस्थानं सूक्ष्मसम्पराये उपशान्तमोहे च भवतीति।

॥ पर्याप्तमनुजगतौ मोहनीयस्य प्रतिग्रहस्थानयन्त्रम् ॥

| प्रतिग्रहस्था० | २२ | २१ | १९ | १८ | १७ | १५ | १४ | १३ | ११ | १० | ९ | ७ | ६ | ५ | ४ | ३ | २ | १ |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| मिथ्यात्वे | ,, | ,, | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० |
| सास्वादने | ० | ,, | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० |
| मिश्र | ० | ० | ० | ० | ,, | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० |
| अविरते | ० | ० | ,, | ,, | ,, | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० |
| देशविरते | ० | ० | ० | ० | ० | ,, | ,, | ,, | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० |
| प्रमत्त | ० | ० | ० | ० | ० | ० | ० | ० | ,, | ,, | ,, | ० | ० | ० | ० | ० | ० | ० |

| | | | | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| अप्रमत्ते | ० | ० | ० | ० | ० | ० | ० | ० | ,, | ,, | ,, | ० | ० | ० | ० | ० | ० | ० |
| अपूर्वकरणे | ० | ० | ० | ० | ० | ० | ० | ० | ,, | ,, | ,, | ० | ० | ० | ० | ० | ० | ० |
| अनिवृत्तिकरणे | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ,, | ,, | ,, | ,, | ,, | ,, | ,, |
| सूक्ष्म० उप० च | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ,, | ० |

तथाऽपर्याप्तमनुजगतौ द्वाविंशतिप्रकृतिरूपमुद्वलितमिश्रसम्यक्त्ववतामनादिमिथ्यादृशां चैकविंशतिप्रकृतिरूपं प्रतिग्रहस्थानं भवतीति ।

॥ अपर्याप्तमनुजगतौ ॥

| प्रति० स्थाने | २२ | २१ |
|---|---|---|
| ओघे मि० च | ,, | ,, |

तथा देवगतौ सामान्येन चतुरग्रशतं पतद्ग्रहे भवति, परं तद् देवस्यौघबन्धादायुर्द्विकमपहृत्य सम्यक्त्वमिश्रयोः प्रक्षेपेण चेति विज्ञेयम्। मिथ्यादृष्टौ जिनसम्यक्त्वमिश्रवर्जमेकोत्तरशतं प्रतिग्रहे प्राप्यते । सास्वादने चतुर्नवतिरेकेन्द्रियजात्यातपस्थावरसेवार्त्तहुण्डनपुंसकमिथ्यात्वरूपसप्तकवर्जनात् । मिश्रे सप्ततिः, तिर्यग्द्विकदुर्भाग्यत्रिकमध्यमाकृतिसंहननचतुष्कोद्योताप्रशस्तखगतिस्त्यानर्द्धित्रिकानन्तानुबन्धिकषायचतुष्कनीचगोत्रस्त्रीवेदरूपचतुर्विंशतीनां वर्जनात् । अविरतसम्यग्दृष्टौ सैव सप्ततिः जिनसम्यक्त्वमिश्रयुता त्रिसप्ततिः प्रतिग्रहे प्राप्यते । भवनपतिव्यन्तरज्योतिष्केष्वोघे त्र्युत्तरशतं प्राप्यते, जिनस्य बन्धाभावेन पतद्ग्रहाभावात् । मिथ्यात्वे मिश्रसम्यक्त्ववर्जमेकोत्तरशतं भवति । सास्वादने चतुर्नवतिः । मिश्रे सप्ततिः । अविरते द्वासप्ततिः प्राप्यते, मिश्रसम्यक्त्वप्रक्षेपादिति । सौधर्मेशानयोरोघे चतुरग्रशतं मिथ्यात्वे त्र्युत्तरशतं सास्वादने चतुर्नवतिर्मिश्रे सप्ततिरविरते त्रिसप्ततिश्चेति । सनत्कुमारादिसहस्रारपर्यन्तेष्वोघे एकोत्तरशतम्, एकेन्द्रियजाति स्थावरातपनाम्नां बन्धाभावेन प्रतिग्रहाभावात्, मिथ्यात्वेऽष्टानवतिः, जिनमिश्रसम्यक्त्वानां प्रतिग्रहाभावात्, सास्वादने चतुर्नवतिः, हुण्डसेवार्त्तनपुंसकमिथ्यात्वरूपाणां प्रतिग्रहाभावात्, मिश्रे सप्ततिः, तिर्यग्द्विकदुर्भाग्यत्रिकमध्यमाकृतिसंहननचतुष्काशुभखगत्युद्योतानन्तानुबन्धिचतुष्कस्त्रीवेदनीचगोत्रस्त्यानर्द्धित्रिकरूपाणां चतुर्विंशतीनां बन्धाभावेन प्रतिग्रहाभावात्, अविरते त्रिसप्ततिः, जिनसम्यक्त्वमिश्ररूपाणां तिसृणां प्रक्षेपाच्चेति । आनतादिग्रैवेयकपर्यवसानेषु सामान्येनाष्टानवतिः, आयुर्जातिस्थावरचतुष्टयदेवनरकवैक्रियतिर्यग्द्विकातपोद्योताहारकद्विकरूपाणां चतुर्विंशतिप्रकृतीनां पतद्ग्रहाभावात्, मिथ्यात्वे पञ्चनवतिः, मिश्रसम्यक्त्वजिननाम्नां पतद्ग्रहाभावात्, सास्वादने एकनवतिः, मिथ्यात्वनपुंसकहुण्डसेवार्त्तरूपाणां प्रकृतीनां प्रतिग्रहाभावात्, मिश्रे सप्ततिः, स्त्यानर्द्धित्रिकदुर्भगत्रिकानन्तानुबन्धिचतुष्कस्त्रीवेदनीचगोत्रमध्यमाकृतिसंहननचतुष्काशुभखगतिरूपाणामेकविंशतिप्रकृतीनां पतद्ग्रहाभावात्, अविरतसम्यग्दृष्टौ त्रिसप्ततिः, जिनसम्यक्त्वमिश्रप्रकृतीनां प्रक्षेपाच्च । अनुत्तरपञ्चके सामान्येऽविरतसम्यग्दृष्टौ च त्रिसप्ततिरेव प्रतिग्रहे प्राप्यत इति ।

॥ देवगतिसामान्ये प्रथमकल्पद्विकपर्यन्तेषु च प्रतिग्रहप्रकृतीना यन्त्रम् ॥

| गुणस्था० | ज्ञाना० | दर्शना० | वेदनीय | मोहनीय | आयु | नाम | गोत्र | अन्तराय | सर्वाग्रम् |
|---|---|---|---|---|---|---|---|---|---|
| ओघे | ५ | ९ | २ | २८ | ० | ५२–५३ | २ | ५ | १०३–१०४ |
| मिथ्यात्वे | ५ | ९ | २ | २६ | ० | ५२ | २ | ५ | १०१ |
| सास्वादने | ५ | ९ | २ | २४ | ० | ४७ | २ | ५ | ९४ |
| मिश्रे | ५ | ६ | २ | १९ | ० | ३२ | १ | ५ | ७० |
| अविरते | ५ | ६ | २ | २१ | ० | ३३ | १ | ५ | ७३ |

॥ सनत्कुमारादिसहस्रारान्तेषु प्रतिग्रहप्रकृतियन्त्रम् ॥

| गुणस्था० | ज्ञाना० | दर्शना० | वेदनीय | मोहनीय | आयु | नाम | गोत्र | अन्तरा० | सर्वाग्रम् |
|---|---|---|---|---|---|---|---|---|---|
| ओघे | ५ | ९ | २ | २८ | ० | ५० | २ | ५ | १०१ |
| मिथ्यादृष्टौ | ५ | ९ | २ | २६ | ० | ४९ | २ | ५ | ९८ |
| सास्वादने | ५ | ९ | २ | २४ | ० | ४७ | २ | ५ | ९४ |
| मिश्रे | ५ | ६ | २ | १९ | ० | ३२ | १ | ५ | ७० |
| अविरते | ५ | ६ | २ | २१ | ० | ३३ | १ | ५ | ७३ |

॥ आनतादिग्रैवेयकपर्यन्तेषु पञ्चानुत्तरेषु च तुर्यगुणस्थाने प्रतिग्रहप्रकृतियन्त्रम् ॥

| गुणस्था० | ज्ञाना० | दर्शना० | वेदनीय | मोहनीय | आयु | नाम | गोत्र | अन्त० | सर्वाग्रम् |
|---|---|---|---|---|---|---|---|---|---|
| ओघे | ५ | ९ | २ | २८ | ० | ४७ | २ | ५ | ९८ |
| मिथ्यात्वे | ५ | ९ | २ | २६ | ० | ४६ | २ | ५ | ९५ |
| सास्वादने | ५ | ९ | २ | २४ | ० | ४४ | २ | ५ | ९१ |
| मिश्रे | ५ | ६ | २ | १९ | ० | ३२ | १ | ५ | ७० |
| अविरते | ५ | ६ | २ | २१ | ० | ३३ | १ | ५ | ७३ |

अथ देवगतौ मोहनीयस्य प्रतिग्रहस्थानान्युच्यन्ते–तत्र सामान्येन देवगतौ चत्वारि प्रतिग्रहस्थानानि भवन्ति, तद्यथा–द्वाविंशतिरेकविंशतिरेकोनविंशतिः सप्तदशेति । मिथ्यादृष्टावष्टाविंशतिसत्ताकस्य सप्तविंशतिसत्ताकस्य वा द्वाविंशतिप्रकृतीनां प्रतिग्रहस्थानं भवति । उद्वलितसम्यक्त्वमिश्रस्य मिथ्यादृष्टेरनादिमिथ्यादृष्टेर्वा सासादने चैकविंशतिप्रकृतिरूपं प्रतिग्रहस्थानं भवति । मिश्रगुणस्थाने क्षायिकसम्यग्दृष्टेरविरते च सप्तदश प्रकृतिरूपं प्रतिग्रहस्थानं प्राप्यते । अविरतसम्यग्दृष्टावौपशमिकसम्यग्दृष्टेर्वेदकसम्यग्दृष्टेश्चैकोनविंशतिप्रकृतिरूपं प्रतिग्रहस्थानं भवति । अनुत्तरवासिनो देवान् विहाय सर्वत्रैवमेव मोहनीयस्थानानि वाच्यानि । अनुत्तरेषु तुर्यगुणस्थानसत्के सप्तदशैकोनविंशतिरूपे द्वे प्रतिग्रहस्थाने भवत इति ॥

॥देवगतौ मोह॰प्रति॰स्थानयन्त्रम् ॥

| ओघेन | २२ | २१ | १९ | १७ | |
|---|---|---|---|---|---|
| मिथ्यात्वे | २२ | २१ | ० | ० | अनुत्तरेषु |
| सास्वादने | ० | ११ | ० | ० | |
| मिश्रे | ० | ० | ० | १७ | |
| अविरते | ० | ० | १९ | १७ | सर्वेषु |

अथ जातिमार्गणायामेकेन्द्रियादिजातिचतुष्के ओघे मिथ्यात्वे च सप्तग्रशतं प्रतिग्रहे प्राप्यते, जिनाहारकद्विकवैक्रियद्विकनरकद्विकदेवद्विकायुश्चतुष्कसम्यक्त्वमिश्ररूपाणामप्राप्यमाणत्वात् । सासादने चतुर्नवतिः प्रतिग्रहे प्राप्यते, जातिचतुष्कस्थावरचतुष्कातपहुण्डसेवार्त्तनपुंसकमिथ्यात्वरूपाणामप्राप्यमाणत्वात् । पञ्चेन्द्रियजातावोघेऽष्टादशाग्रशतम्, मिथ्यात्वे त्रयोदशाग्रशतम्, सासादनेऽष्टानवतिः, मिश्रे चतुःसप्ततिः, अविरते सप्तसप्ततिः, देशविरतेऽष्टषष्टि , प्रमत्ते चतु·षष्टि , अप्रमत्ते षष्टि , अपूर्वकरणे प्रथमभागे षष्टिरपूर्वकरणद्वितीयादिभागपञ्चकेऽष्टपञ्चाशदपूर्वकरणसप्तमभागे चाष्टाविंशति ,अनिवृत्तिकरणप्रथमभागे चतुर्विंशतिः, द्वितीयभागे त्रयोविंशतिः, तृतीयभागे द्वाविंशतिः, चतुर्थभागे एकविंशति', पञ्चमभागे च विंशति', सूक्ष्मसम्पराये एकोनविंशति·, उपशान्ते च द्वे प्रकृती प्रतिग्रहे भवन्तीति । जातिचतुष्के द्वाविंशत्येकविंशतिरूपे द्वे मोहनीयस्य प्रतिग्रहस्थाने भवतः । पञ्चाक्षजातौ च मोहनीयस्य पतद्ग्रहस्थानानि सर्वाणि मनुजगतिवत् बोधव्यानीति ॥

॥ जातिमार्गणाया प्रतिग्रहप्रकृतियन्त्रम् ॥

| जातयः | ओ० | मि० | सा० | मि० | अवि० | दे० | प्र० | अप्र० अपू० च | अपू० २–६ | अपू० ७ मे | अनि० १–५ | सू० स० | उ० |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ए० ४ | १०७ | १०७ | ९४ | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० |
| पञ्चे० | ११८ | ११३ | ९८ | ७४ | ७७ | ६८ | ६४ | ६० | ५८ | २८ | २४ २३ २२ २१ २० | १९ | २ |

कायमार्गणाया पृथिवीजलवनस्पतिमार्गणासु जातिचतुष्कवद्वाच्यम् । तैजसकवायुकायिकयोरोघे मिथ्यात्वे च चतुरग्रशतं प्रतिग्रहे प्राप्यते, आयुश्चतुष्कजिनाहारकद्विकवैक्रियद्विकदेवद्विकनरकद्विकसम्यक्त्वमिश्रमनुजद्विकोच्चगोत्ररूपाणामप्राप्यमाणत्वात् । मोहनीयप्रतिग्रहस्थाने जातिचतुष्कवत् वाच्ये, सासादनाभावाच्च तत्र न किमपि वक्तव्यमिति ।

नसकायमार्गणाया प्रतिग्रहप्रकृतयः मोहनीयप्रतिग्रहस्थानानि च पञ्चेन्द्रियवत् वाच्यानीति ॥

योगमार्गणाया मनोवागष्टके पञ्चाक्षवद्वाच्यम् । औदारिककाययोगे मनुजगतिवद्वाच्यम् । औदारिकमिश्रकाययोगे ओघे चतुर्दशाग्रशतं प्रतिग्रहे प्राप्यते, आहारकद्विकनरकद्विकायुश्चतुष्करूपाणामप्राप्यमाणत्वात् । मिथ्यादृष्टौ जिनसुरद्विकवैक्रियद्विकसम्यक्त्वमिश्ररूपाणामप्राप्यमाणत्वेन सप्ताग्रशतं प्रतिग्रहे प्राप्यते । सासादने चतुर्नवतिः प्रतिग्रहे प्राप्यते, स्थावरचतुष्कजातिचतुष्कातपहुण्डसेवार्त्तमिथ्यात्वनपुंसकवेदरूपाणां त्रयोदशप्रकृतीनां बन्धाभावेन प्रतिग्रहाभावात् । अविरतसम्यग्दृष्टौ द्वासप्ततिः प्रतिग्रहे प्राप्यते, स्त्यानर्द्धित्रिकानन्तानुबन्धिचतुष्कस्त्रीवेदनीचगोत्रदुर्भाग्यत्रिकतिर्यग्द्विकाद्यसंहननपञ्चकौदारिकद्विकमनुजद्विकमध्यमसंस्थानचतुष्काशुभखगत्योद्योतरूपैकोनत्रिंशत्प्रकृतीनां बन्धाभावेन प्रतिग्रहाभावात् जिनसुरद्विकवैक्रियद्विकसम्यक्त्वमिश्ररूपाणां प्रक्षेपाच्च । सयोगिनि सातस्य बन्धसद्भावेऽपि साम्परायिकबन्धाभावेन संक्रमप्रायोग्यस्यासातस्य सद्भावेऽपि प्रतिग्रहाभावः । मनोवागष्टके मोहनीयस्य प्रतिग्रहस्थानानि पञ्चाक्षवद्वाच्यानि । औदारिककाययोगिनो मनुजवद्वाच्यानि । औदारिकमिश्रकाययोगे मिथ्यादृष्टौ मोहनीयस्य द्वाविंशतिरेकविंशतिश्च प्रतिग्रहस्थानं भवति । सासादने एकविंशतिरूपं भवति । अविरतसम्यग्दृष्टौ सप्तदशप्रकृतिरूपं प्रतिग्रहस्थानं क्षायिकसम्यग्दृष्टेः एकोनविंशतिरूपं वेदकसम्यग्दृष्टेश्च भवतीति । कार्मणकाययोगेऽपि औदारिकमिश्रवत् प्रतिग्रहप्रकृतयो मोहनीयप्रतिग्रहस्थानानि च वाच्यानि, नवरमविरतसम्यग्दृष्टावौदारिकद्विकमनुजद्विकप्रथमसंहननरूपाणां पञ्चानां प्रकृतीनां देवगतौ बन्धसद्भावात्प्रतिग्रहत्वमपि तथारूपेण वेत्तव्यमिति ।

वैक्रियद्विककाययोगे सामान्यदेवगतिवत् प्रतिग्रहप्रकृतयः मोहनीयप्रतिग्रहस्थानानि च वाच्यानि । आहारकद्विके चतुष्षष्टिः प्रतिग्रहे प्राप्यते । आहारककाययोगेऽप्रमत्तगुणस्थानविवक्षाया त्वोघे पट्षष्टिः, प्रमत्ते चतुःषष्टिः, अप्रमत्ते च षष्टिरिति । मनोवागष्टकयन्त्रे पञ्चाक्षयन्त्रवद्वाच्ये, वैक्रियद्विकयन्त्रे देवगतिवद्वाच्ये, औदारिककाययोगस्य यन्त्रं च मनुजगतिवद्वाच्यमिति ॥

॥ औदारिकमिश्रे कार्मणकाययोगे च प्रतिग्रहप्रकृतियन्त्रम् ॥

| बन्धस्था० | ज्ञाना० | दर्शना० | वेदनीय | मोहनीय | आयु | नाम | गोत्र | अन्तराय | सर्वाग्रम् |
|---|---|---|---|---|---|---|---|---|---|
| ओघे | ५ | ९ | २ | २८ | ० | ६३ | २ | ५ | ११४ |
| मिथ्यात्वे | ५ | ९ | २ | २६ | ० | ५८ | २ | ५ | १०७ |
| सासादने | ५ | ९ | २ | २४ | ० | ४७ | २ | ५ | ९४ |
| अविरते | ५ | ६ | २ | २१ | ० | ३२ ३० | १ | ५ | ७२ ७० |
| सयोगिनि | ० | ० | ० | ० | ० | ० | ० | ० | ० |

॥ आहारकद्विके प्रतिग्रहप्रकृतियन्त्रम् ॥

| बन्धस्था॰ | ज्ञाना॰ | दर्शना॰ | वेदनीय | मोहनीय | आयु | नाम | गोत्र | अन्तराय | सर्वाग्रम् |
|---|---|---|---|---|---|---|---|---|---|
| ओघे प्रम॰ च | ५ | ६ | २ | १३ | ० | ३२ | १ | ५ | ६४ |

॥ आहारकेऽप्रमत्तभावविवक्षाया प्रतिग्रहप्रकृतियन्त्रम् ॥

| गुणस्था॰ | ज्ञाना॰ | दर्शना॰ | वेदनीय | मोहनीय | आयु | नाम | गोत्र | अन्तराय | सर्वाग्रम् |
|---|---|---|---|---|---|---|---|---|---|
| ओघे | ५ | ६ | २ | १३ | ० | ३४ | १ | ५ | ६६ |
| प्रमत्ते | ५ | ६ | २ | १३ | ० | ३२ | १ | ५ | ६४ |
| अप्रमत्ते | ५ | ६ | १ | ११ | ० | ३१ | १ | ५ | ६० |

वेदमार्गणाया वेदत्रयेऽपि मिथ्यादृष्ट्यादौ पञ्चाक्षवत्प्रतिग्रहप्रकृतयो वाच्या॰ । मोहनीयस्य प्रतिग्रहस्थानानि पुंसि पञ्चदश भवन्ति, तद्यथा–द्वाविंशतिरेकविंशतिरेकोनविंशतिरष्टादश सप्तदश पञ्चदश चतुर्दश त्रयोदशैकादश दश नव सप्त षट् पञ्च चतुरिति । नपुंसकस्त्रीवेदयोस्तु त्रयोदश भवन्ति, तद्यथा–द्वाविंशतिरेकविंशतिरेकोनविंशतिरष्टादश सप्तदश पञ्चदश चतुर्दश त्रयोदशैकादश दश नव सप्त पञ्चेति । तत्र मिथ्यादृष्टौ द्वाविंशत्येकविंशतिरूपे द्वे, सासादने एकविंशतिप्रकृतिरूपम्, मिश्रे सप्तदशप्रकृत्यात्मकम्, अविरते सप्तदशाष्टादशैकोनविंशतिरूप त्रिकम्, देशविरते त्रयोदशचतुर्दशपञ्चदशरूपं त्रिकम्, प्रमत्ताप्रमत्तयो॰ नवदशैकादशरूपं त्रिकम्, अपूर्वकरणे नवैकादशरूप द्विकं, अनिवृत्तिकरणे च शेषाणि सप्तषट्पञ्चचतूरूपाणि चत्वारि पुंसि, सप्तपञ्चरूपे च द्वे स्त्रीनपुंसकयोश्च भवन्तीति । कषायमार्गणायामाद्यद्वादशकषायेषु स्वस्वगुणस्थानोक्ता या॰ प्रतिग्रहप्रकृतयो यानि च बन्धस्थानानि तानि स्वयं वाच्यानि । सञ्ज्वलनचतुष्केऽपि पतद्ग्रहप्रकृतय॰ स्वगुणस्थानोक्ता वाच्याः । पतद्ग्रहस्थानानि सञ्ज्वलनक्रोधे द्विप्रकृतिरूपमेकप्रकृतिरूप च, सञ्ज्वलनमाने च एकप्रकृतिरूपं त्यक्त्वा शेषाणि सर्वाणि प्रतिग्रहस्थानानि भवन्ति । सञ्ज्वलनमायालोभयोस्तु सर्वाणि भवन्ति । एषा भावना गुणस्थानद्वारेण सवेधाधिकारे वक्ष्यत इति । ज्ञानमार्गणायामज्ञानत्रिके ओघे मिथ्यात्वे च त्रयोदशाग्रशतम्, सास्वादनसम्यग्दृष्टावष्टानवति॰, मिश्रे च चतु॰सप्तति॰ प्रतिग्रहे प्राप्यत इति । केवलज्ञानमार्गणाया न सन्ति प्रतिग्रहप्रकृतय प्रतिग्रहस्थानानि च । मतिश्रुतावधिज्ञानमार्गणासु ओघे एकोनाशीतिरविरते सप्ततिर्देशविरतेऽष्टषष्टिः प्रमत्ते चतु ष ष्टिरप्रमत्ते षष्टिरपूर्वकरणे षष्टिरनिवृत्तिकरणे चतुर्विंशति॰ सूक्ष्मसम्पराये एकोनविंशतिरुपशान्ते च द्वे प्रकृती भवन्ति । मन पर्यवज्ञानमार्गणायामोघे षट्षष्टि॰ प्रमत्ते चतु षष्टिरप्रमत्ते षष्टिरपूर्वकरणे षष्टिरनिवृत्तिकरणे चतुर्विंशति॰ सूक्ष्मसम्पराये एकोनविंशतिरुपशान्तमोहे च द्वे प्रकृती भवन्तीति । अज्ञानत्रिके मोहनीयस्य प्रतिग्रहस्थानानि त्रीणि भवन्ति, तद्यथा–द्वाविंशतिरेकविंशति॰ सप्तदश च । तत्र मिथ्यादृष्टौ द्वाविंशतिरेकविंशतिश्च, सासादने एकविंशति, मिश्रे सप्तदशप्रकृत्यात्मक च भवतीति । मतिश्रुतावधिज्ञानमार्गणासु द्वाविंशत्येकविंशतिरूपे वर्जयित्वा शेषाणि सर्वाणि भवन्ति । मन पर्यवज्ञानिनः द्वाविंशत्येकविंशत्येकोनविंशत्यष्टादशसप्तदशपञ्चदशचतुर्दशत्रयोदशरूपाणि वर्जयित्वा शेषाणि दश भवन्तीति ।

सयमे अविरतमार्गणायामोघे षोडशाग्रशतम्, मिथ्यात्वे त्रयोदशाग्रशतम्, सासादनेऽष्टानवति॰, मिश्रे चतु सप्ततिः, अविरते च सप्तसप्ततिर्भवति । देशविरतिमार्गणायामष्ट-

षष्टि प्राप्यते। परिहारविशुद्धावोघे षट्षष्टि, प्रमत्ते चतुष्पष्टि, अप्रमत्ते च षष्टिर्भवति। सामायिकच्छेदोपस्थानीययोरोघे षट्षष्टि, प्रमत्तादिषु च तत्तद्गुणस्थानोक्ता प्रकृतय प्रतिग्रहे प्राप्यन्ते। सूक्ष्मसम्पराये एकोनविंशति प्राप्यते। यथाख्याते द्वे भवत। मोहनीयस्याविरतमार्गणाया प्रतिग्रहस्थानानि द्वाविंशत्येकविंशत्येकोनविंशत्यष्टादशसप्तदशरूपाणि पञ्च भवन्ति। देशविरते त्रयोदशचतुर्दशपञ्चदशरूपाणि त्रीणि भवन्ति। परिहारविशुद्धावेकादशदशनवरूपाणि त्रीणि भवन्ति। सामायिकच्छेदोपस्थापनीययोरेकादशदशनवसप्तषट्पञ्चचतुस्त्रिद्व्येकरूपाणि दश भवन्ति। सूक्ष्मसम्पराये यथाख्याते च द्विप्रकृत्यात्मकमेकमिति।

दर्शनमार्गणाया चक्षुरचक्षुषोर्गुणस्थानोक्ता सर्वा अपि प्रतिग्रहप्रकृतय प्रतिग्रहस्थानानि च भवन्ति। अवधिदर्शनमार्गणाया मतिज्ञानवत् सर्वं वाच्यम्। सिद्धान्तिकाभिप्रायेणाचक्षुर्दर्शनवद्वा वाच्यम्। केवलदर्शनमार्गणाया न सन्ति प्रतिग्रहप्रकृतय प्रतिग्रहस्थानानि चेति।

लेश्यामार्गणास्वशुभलेश्यात्रिके ओघे षोडशाग्रशत प्रतिग्रहे प्राप्यते, आहारकद्विकवर्जनात्। मिथ्यादृष्टौ सम्यक्त्वमिश्रजिनवर्जं त्रयोदशोत्तरशत सासादनेऽष्टनवति मिश्रे चतुस्सप्ततिरविरतसम्यग्दृष्टौ सप्तसप्ततिश्च प्रतिग्रहे प्राप्यते। तेजोलेश्यायामोघे दशाग्रशतम्, नरकद्विकसूक्ष्मविकलत्रिकबन्धाभावात्, मिथ्यात्वे पञ्चोत्तरशतम्, आहारकद्विकजिनमिश्रसम्यक्त्वाभावात्। सासादने अष्टनवति, मिश्रे चतुस्सप्तति, अविरतसम्यग्दृष्टौ सप्तसप्तति, देशविरतावष्टषष्टि, प्रमत्ते चतुष्षष्टि, अप्रमत्ते च षष्टि प्राप्यते। पद्मलेश्यायामोघे सप्तोत्तरशत प्राप्यते। मिथ्यादृष्टौ द्व्युत्तरशत भवति। सासादने अष्टनवति प्राप्यते। मिश्रे चतुस्सप्ततिर्भवति। अविरतसम्यग्दृष्टौ सप्तसप्तति प्राप्यते। देशविरतावष्टषष्टिर्भवति। प्रमत्ते चतुष्षष्टिरप्रमत्ते च षष्टिर्भवति। शुक्ललेश्यायामोघे चतुरग्रशतम्, मिथ्यादृष्टौ नवनवति, सासादने पञ्चनवति, मिश्रे चतुःसप्तति, अविरतादिषु च सप्तसप्तत्यादयस्तत्तद्गुणस्थानोक्ता प्रतिग्रहप्रकृतयो वाच्या। अशुभलेश्यात्रिके द्वाविंशत्येकविंशत्येकोनविंशतिसप्तदशरूपाणि चत्वारि प्रतिग्रहस्थानानि भवन्ति। तेज पद्मयो द्वाविंशत्येकविंशत्येकोनविंशतिसप्तदशपञ्चदशत्रयोदशैकादशनवरूपाण्यष्टप्रतिग्रहस्थानानि भवन्ति। शुक्ललेश्याया सर्वाणि प्रतिग्रहस्थानानि भवन्तीति। भव्यमार्गणाया प्रतिग्रहप्रकृतयो मोहनीयस्थानानि च पञ्चाक्षवद्वाच्यानि। अभव्यमार्गणाया त्रयोदशाग्रशत प्रतिग्रहे प्राप्यते सम्यक्त्वमिश्राहारकद्विकजिनाभावात्। मोहनीयप्रतिग्रहस्थान त्वेकविंशतिप्रकृतिरूपमेकमेव भवतीति।

सम्यक्त्वमार्गणाया वेदकसम्यक्त्वे ओघे एकोनाशीति प्रतिग्रहे प्राप्यते। अविरतसम्यग्दृष्टौ सप्तसप्तति प्राप्यते। देशविरतेऽष्टषष्टि भवति। प्रमत्ते चतुष्षष्टिरप्रमत्ते च षष्टि प्राप्यते। औपशमिकक्षायिकसम्यक्त्वयतोऽप्येवमेवाविरत्यादिगुणस्थानचतुष्के पतद्ग्रहप्रकृतयो वाच्याः। अपूर्वकरणादिषु स्वस्वगुणस्थानोक्ता प्रतिग्रहप्रकृतयो वाच्या नवर क्षायिकसम्यग्दृष्टौ सर्वेषु गुणस्थानेषु सम्यक्त्वमिश्रवर्जा वक्तव्या। मिथ्यात्वसासादनमिश्रेष्वपि स्वस्वगुणस्थानोक्ता प्रतिग्रहप्रकृतयो वाच्या। वेदकसम्यग्दृष्टौ मोहनीयस्य प्रतिग्रहस्थानान्येकोनविंशत्यष्टादशपञ्चदशचतुर्दशैकादशदशरूपाणि षट् भवन्ति। क्षायिकसम्यग्दृष्टौ प्रतिग्रहस्थानानि सप्तदशत्रयोदशनवपञ्चचतुस्त्रिद्व्येकरूपाण्यष्टौ भवन्ति। औपशमिकसम्यग्दृष्टावेकोनविंशतिपञ्चदशैकादशसप्तषट्पञ्चचतुस्त्रिद्विरूपाणि नव प्रतिग्रहस्थानानि भवन्ति। मिथ्या-

दृष्टौ द्वाविंशत्येकविंशतिरूपे, सासादने एकविंशतिरूपम् मिश्रे च सप्तदशप्रकृतिरूपं प्रतिग्रहस्थान भवतीति। सञ्ज्ञिमार्गणाया प्रतिग्रहप्रकृतयो मोहनीयस्य प्रतिग्रहस्थानानि च पञ्चाक्षवदसञ्ज्ञिनि च विकलाक्षवत् वाच्यानीति।

आहारकमार्गणाया पञ्चाक्षवदनाहारकमार्गणाया च कार्मणकाययोगवत्पतद्ग्रहप्रकृतयो मोहनीयप्रतिग्रहस्थानानि च वाच्यानीत्युक्तानि मार्गणास्थानेषु प्रतिग्रहस्थानानि तत्प्रकृतयश्च॥

॥ अथ मार्गणासु सत्ताप्रकृतय उच्यन्ते ॥

यद्यपि सत्ताप्रकृतय सत्त्वस्थानानि तदनुसृत्य सङ्क्रमप्रकृतय॰ सङ्क्रमस्थानानि च मुद्रितयन्त्रानुसारेण लिखितानि तथापि—"एकोनत्रिंशत तिर्यक्पञ्चेन्द्रियमनुष्यप्रायोग्य बध्नत सासादनस्य सप्ताप्युदयस्थानानि, तत्रैकेन्द्रियविकलेन्द्रियतिर्यक्पञ्चेन्द्रियमनुष्यदेवनैरयिकाणा सासादनाना स्वस्वोदयस्थानेषु वर्त्तमानानामेकमेव सत्तास्थानमष्टाशीतिः। नवर मनुष्यस्य त्रिंशदुदये वर्त्तमानस्योपशमश्रेणीत' प्रतिपतत सासादनस्य द्विनवति एव त्रिंशद्बन्धकस्यापि"। "तत्राष्टाविंशतिं बध्नत सासादनस्य द्वे उदयस्थाने—त्रिंशदेकत्रिंशश्च। अष्टाविंशतिर्हि सासादनस्य बन्धयोग्या देवगतिप्रायोग्या, न च करणापर्याप्त सासादनो देवगतिप्रायोग्या बध्नाति, तत॰ शेषा उदया नोत्पद्यन्ते। तत्र मनुष्यानधिकृत्य त्रिंशदुदये द्वे अपि ९२,८८, सत्तास्थाने, तिर्यक्पञ्चेन्द्रियानधिकृत्याष्टाशीतिरेव, द्विनवतेरुपशमश्रेणीतः प्रतिपात एव लाभात्, तिरश्चा चोपशमश्रेण्यसम्भवात्, एकत्रिंशदुदये त्वष्टाशीतिरेव यतोऽसौ तिर्यक्पञ्चेन्द्रियाणामेव, न च तेषा द्विनवतिर्घटते" इति मलयगिरिकृतसप्ततिकावृत्तिं न्यायाचार्यकृतकर्मप्रकृतिवृत्तिं चानुसृत्य मनुष्यगतिभिन्नगतिसम्भावितमार्गणासु सासादनभावे आहारकसप्तकं सत्ताया मुद्रितयन्त्रेषु स्वीकृतमपि नात्राधिकृतमुक्तवचनविरोधात्, यत्र च लिखितं तत्र यन्त्रानुसारेण बोध्यमिति।

नरकगतौ देवायुर्वर्जं सप्तपञ्चाशच्छतमोघे मिथ्यादृष्टौ च भिन्नभिन्नजीवमाश्रित्य सत्ताया भवति। सास्वादने आहारकसप्तकजिनवर्जमेकोनपञ्चाशच्छतं मिश्रे आहारकसप्तकयुतं षट्पञ्चाशच्छत भवति, 'नितिगुणे विणा तित्थ' इति वचनात्। अविरतसम्यग्दृष्टौ सामान्येन देवायुर्वर्जं सप्तपञ्चाशच्छतं भवति। क्षायिकसम्यग्दृष्टिमाश्रित्य सामान्येनैकोनपञ्चाशच्छत भवति, देवतिर्यगायुर्दर्शनसप्तकाभावात्, एकं जीवमाश्रित्य तु जिननामाभावेन अष्टचत्वारिंशच्छतं जिनसत्त्वे आहारकसप्तकाभावेन च द्विचत्वारिंशच्छत उभयाभावे त्वेकचत्वारिंशच्छत भवति। आद्यनरकत्रिकेऽप्येवमेव वक्तव्यम्। पङ्कादित्रिके देवायुर्जिननामवर्जं षट्पञ्चाशच्छतमोघेऽविरते च भवति। आद्यगुणस्थानत्रिके तु रत्नप्रभावद्वाच्यम्। तमस्तमाया च मनुजायुर्वर्जं शेष पङ्कादिवद् वाच्यम्। देवगतौ ओघे आद्यगुणस्थानत्रिके नरकगतितुल्यं वाच्यम्, नवर नरकायु'स्थाने देवायुर्वक्तव्य जिननाम च मिथ्यादृष्टौ न वक्तव्यम्। अविरतसम्यग्दृष्टावेकस्मिन्नपि जीवे जिनाहारकसप्तकसद्भावो वाच्य', शेष नरकवदिति। भवनपतिव्यन्तरज्योतिष्केषु जिननामसत्ता आनतादिषु च तिर्यगायु सत्ता न वाच्या, तेन भवनपतिव्यन्तरज्योतिष्केषु नरकायुर्जिनवर्जं षट्पञ्चाशच्छत भवति, सौधर्मादिषु सहस्रारपर्यन्तेषु च नरकायुर्वर्जं सप्तपञ्चाशच्छत भवति। आनतादिषु नरकतिर्यगायुर्वर्जं षट्पञ्चाशच्छत भवति। तिर्यग्गतौ जिननामवर्जं सप्तपञ्चाशच्छतमोघे सासादनवर्जेषु चतुर्षु गुणस्थानेषु च भवति। सासादने आहारकसप्तकवर्जं सार्धशतं भवति। मनुष्यगतौ प्राक् गुणस्थानोक्ता सर्वा अपि सत्ताप्रकृतयो वाच्या इति ॥४॥

प्रथमजातिचतुष्के असञ्ज्ञिनि च ओघे मिथ्यादृष्टौ च जिनदेवनरकायुष्कवर्जं पञ्चपञ्चाश-

च्छत सत्ताया भवति, आहारकसप्तकोद्वलने त्वष्टचत्वारिंशच्छत भवति, देवद्विके उद्वलिते तु षट्चत्वारिंशच्छत भवति, नरकद्विकवैक्रियसप्तकयोस्तूद्वलितयो सप्तत्रिंशदधिक शत भवति। तेजोवायुकायिकयो मनुजद्विकोच्चैर्गोत्रोद्वलितयोश्चतुस्त्रिंशदधिक शत भवति। मनुजद्विकमुच्चैर्गोत्र चोद्वलय्य तेजोवायुभ्यो निर्गतस्य यावदुच्चैर्गोत्र मनुजद्विक च न बध्नाति तावदन्यत्रापि चतुस्त्रिंशदधिक शत भवति। सासादने जिनाहारकसप्तकतिर्यग्नरायुर्लिक-वर्जसप्तचत्वारिंशच्छत भवति, तत्रोक्तप्रकृतीनामुद्वलनासमास्यभावात्। पञ्चाक्षजातौ मनुजगतिवद्वाच्यमिति ॥ ६ ॥

प्रथमकायपञ्चके प्रथमजातिचतुष्कवत्, नवर तेजोवायुकायिकयो सत्ताया मनुजायुरपि न वाच्यम्। त्रसकाये पञ्चाक्षवद्वाच्यमिति ॥ ६ ॥

योगत्रिकवेदत्रिककषायचतुष्ककेवलज्ञानवर्जज्ञानचतुष्काज्ञानत्रिकाविरतदेशविरतसामायिकच्छेदोपस्थापनीयपरिहारविशुद्धिकसूक्ष्मसम्परायथाख्यातकेवलदर्शनवर्जदर्शनत्रिकलेश्याषट्कभव्यौपशमिकक्षायोपशमिकमिथ्यात्वसञ्ज्ञ्याहारकानाहारकरूपासु चत्वारिंशन्मार्गणास्वष्टपञ्चाशच्छत सत्ताया भवति। यासु मार्गणासु यावन्ति गुणस्थानानि तासु गुणस्थानोक्ता सत्ताप्रकृतयो वाच्या ,नवरमनाहारकमार्गणाया सासादने आहारकसप्तकव्यतिरिक्ता वाच्या । केवलज्ञानदर्शनयोर्नरकद्विकतिर्यग्द्विकातपोद्योतजातिचतुष्कस्थावरसाधारणसूक्ष्मवर्जनामनवतिर्वेदनीयद्विकगोत्रद्विकमनुजायूरूपा पञ्च एव पञ्चनवति प्रकृतयोऽयोगिन उपान्तसमय यावत् सत्ताया भवन्ति। चरमसमये तु सातासातयोरन्यतरा प्रकृतिरुच्चैर्गोत्र मनुजायु मनुजगतिपञ्चेन्द्रियजातित्रसत्रिकसौभाग्यादेययश कीर्त्तिजिनरूपनामनवकमिति द्वादश प्रकृतय सत्ताया मनुजानुपूर्व्या सह तु त्रयोदश भवन्ति ॥ ४० ॥ सासादनमिश्ररूपमार्गणाद्विकेऽपि जिनवर्ज सप्तपञ्चाशच्छत सत्ताया भवति। क्षायिकसम्यक्त्वे एकपञ्चाशच्छत सत्ताया भवति। अविरतादिषु क्षायिकसम्यक्त्वमाश्रित्य गुणस्थानोक्ता सत्ता वाच्या। अभव्यमार्गणाया च सम्यक्त्वमिश्रजिनाहारकसप्तकवर्जमष्टचत्वारिंशच्छत सत्ताया भवतीति ॥ ४ ॥

अथ मार्गणासु सत्प्रकृतियन्त्राणि । ४ गतिमार्गणासु सत्प्रकृतयः ।

| नरकगतौ [ १-२-३ नरकेषु ] | —१५७-१५६-१४९-१४८-१४२-१४१ इति । ओघे— १५७ सुरायुर्वर्जम् मिथ्या०— " " सास्वा-१४९ आहारसप्तकजिनसुरायु० मिश्र—१५६ जिनसुरायुर्वर्जम् अविरत—१५७ सुरायुर्वर्जम् । १४९ देवतिर्यगायुर्दर्शनसप्तकवर्जम् । [ क्षायिकसम्यग्दृष्टीनाम् ] १४८ जिनवर्जम् } एकजीव १४२ आहा० वर्जम् } माश्रित्य । १४१ जिनाहारकसप्तकवर्जम् । |
|---|---|
| ४-५-६नरकेषु-१५६-जिनसुरायुर्वर्जम् ७ मा नरके-१५५-नरसुरायुर्जिनवर्जम् | ओघ० मनु० १-२-३ ए० प्रभावत् |

| देवगतौ सौधर्मादा सहस्रारम् | १५७-१५६ [ इति द्वे ] ओघे—१५७ नरकायुर्वर्जम् मिथ्या०—१५६ नरकायुर्जिनव० सास्वा०—१४९आहा०स०जि०नरकायु० मिश्रे—१५६ जिननरकायुर्व० अविरते—१५७ नरकायुर्वर्जे |
|---|---|
| आनतादिषु सर्वेषु—१५६ नरकायुस्तिर्यगायुर्वर्जम् भवन० व्य० ज्योतिष्केषु—१५६ जिननरकायुर्वर्जे | सौधर्मवत् |
| तिर्यग्गतौ | —१५७ जिनवर्ज [ ओघे सास्वादनवर्जेषु च, सासादने १५० ] |
| मनुष्यगतौ | —१५८-१५७इत्यादि सर्वाणि पूर्ववत् |

५ असंज्ञिनि जातिमार्गणायां च प्रकृतिसत्ता ।

| | | |
|---|---|---|
| एक-द्वि-त्रि-चतुरिन्द्रियेषु असंज्ञिनि च | ओघे मि } स्थाने च } | १४५-जिनसुरायुनारकायुर्वर्जं<br>१४८-आहा० ७ वर्जम्<br>१४६-सुरद्विकवर्जं<br>१३७-नरक २-वै० ७ वर्जं<br>१३४-मनुज२-उच्चैर्गोत्रवर्जं |
| | सास्वादने-१४७ जिनाहा ० तिर्यग् आयु वेजा | |
| पञ्चेन्द्रिये | सर्वत्र मनुजगतिवत् । | |
| | ६ कायमार्गणायाम् । | |
| ५ स्थावरेषु | प्रथमजातिचतुष्कवत् । | |
| १-त्रसकाये | पञ्चेन्द्रियजातिवत् । | |

योगादिमार्गणासु ।

| | |
|---|---|
| योग ३-वेद३-कषाय४-ज्ञान४-अज्ञान३-चारित्र७-दर्शन३-लेश्या६-भव्य-उपशम-क्षयोप०-मिथ्या०-संज्ञि-आहा० २-इति ४० मार्गणासु | ओघे-१५८ गुणस्थानेषु-गुणस्थानोक्तसत्तानुसारेण |
| केवल २ कयो-९५-१२ [ १३ वजा ]— | |
| ९५-नाम ९० [नरक२-ति०२-आतप-उद्योत-जाति४-स्था०-साधा०-सूक्ष्मवर्ज ] वेदनीय२- गोत्र२-नरायु १२ [ १२ ] वेदनीय१-उच्चै ०-नरायु -नृगति-पञ्चे-त्रसादि३-सौभा०-आदेय-यश -जिन [-नरानुपू०-वा ] | सयोगिन आरभ्यायोग्युपान्त्यसमय यावत् । अयोगस्य समये । |
| सास्वादने मिश्रे | -१५७ जिनवर्जम् । |
| क्षायिकसम्य० | ओघे- दर्शनसप्तकवर्जम् चतुर्थात् १४ गु०षु गुणस्थानोक्त सत्तावत् |
| अभव्ये | ओघे, मिथ्या० च } १४८-सम्य०-मिश्र-जिन-आहा० ७ वर्जे |

अथ मूलप्रकृतीराश्रित्य सत्तास्थानान्युच्यन्ते ।

मनुजगतिवर्जगतित्रिकप्रथमजातिचतुष्कत्रसकायवर्जकायपञ्चकवेदत्रिककषायचतुष्काज्ञानत्रिकाविरतदेशविरतसामायिकच्छेदोपस्थापनीयपरिहारविशुद्धिकसूक्ष्मसम्परायशुक्ललेश्यावर्जलेश्यापञ्चकाभव्योपशमक्षयोपशममिश्रसास्वादनमिथ्यात्वासंज्ञिष्वष्टप्रकृत्यात्मकमेकमेव सत्त्वस्थानं भवति । मनुजगतिपञ्चेन्द्रियजातित्रसकाययोगत्रिकयथाख्यातशुक्ललेश्याभव्यक्षायिकसम्यक्त्वसञ्ज्याहारकेषु सप्तप्रकृत्यात्मकमष्टप्रकृत्यात्मकं चतुष्प्रकृत्यात्मकं चेति त्रीणि भवन्ति । मत्यादिज्ञानचतुष्ककेवलदर्शनवर्जदर्शनत्रिकेष्वष्टप्रकृत्यात्मकं सप्तप्रकृत्यात्मकं चेति द्वे भवतः । केवलज्ञानदर्शनयोश्चतुष्प्रकृत्यात्मकमेकमेव भवति । अनाहारकेऽष्टप्रकृत्यात्मकं चतुष्प्रकृत्यात्मकं चेति द्वे भवत इति ।

अथ मार्गणासु मूलप्रकृतिसत्स्थानानि ।

| | |
|---|---|
| ३ अमनुजगति-४ जाति-५ स्थावर काय-३ वेद-४ कषाय-३ अज्ञान-६ अयथा० चारित्र-५ अशुक्ललेश्या-१ अभव्य-५ अक्षायिकसम्य०- १ असंज्ञि इति ४० मार्गणासु | ८ प्रकृतिरूपमेकं सत्स्थानम् |
| मनुज-पञ्चे०-त्रस-योग ३-यथा०-शुक्ल-भ०-क्षा०-संज्ञि-आहा०-इति १२ मार्गणासु | ८-सर्वमूलप्रकृतिरूपम् । ७-मोहनीयवर्जं । ४-नाम-गोत्र-वेदनीय-आयुष्यरूपं च । |
| ४ ज्ञान-३ दर्शन- | ८ सर्वप्रकृतिरूपम्, ७ मोहवर्जं |
| केवलयो - | ४ नाम-गोत्र-वेदनीयायुरूपम् । |
| १ अनाहारके- | ८ सर्वप्रकृतिरूपम्, ४ केवलद्विकवत् । |

॥ अथोत्तरप्रकृतीराश्रित्य सत्तास्थानान्युच्यन्ते ॥

ज्ञानावरणान्तराययोः केवलज्ञानदर्शनवर्जासु पष्टिमार्गणासु सर्वगुणस्थानेषु पञ्चप्रकृत्यात्मकमेकमेव सत्त्वस्थानं भवति, केवलज्ञानदर्शनमार्गणयोर्नास्ति, तयोः क्षीणत्वात् । मनुजगतिवर्जगतित्रिकैकेन्द्रियादिजातिचतुष्कभूम्यादिकायपञ्चकाज्ञानत्रिकपरिहारविशुद्धिकदेश-

विरताविरतशुक्लेश्यावर्जलेश्यापञ्चकाभव्यमिथ्यात्वसासादनमिश्रक्षायोपशमिकौपशमिका-सञ्ज्ञ्यनाहारकेषु दर्शनावरणस्य स्वीयस्वीयगुणस्थानं यावत् नवप्रकृत्यात्मकं सत्तास्थानं भवति तस्य च मनुजगतिपञ्चेन्द्रियजातित्रसकाययोगत्रिककेवलज्ञानवर्जज्ञानचतुष्कयथाख्यातचारित्रकेवलदर्शनवर्जदर्शनत्रिकशुक्लेश्याभव्यक्षायिकसम्यक्त्वसञ्ज्ञ्याहारकेषूपशमश्रेण्यामुपशान्तमोहं यावत् क्षपकश्रेण्यां त्वनिवृत्तिप्रथमभागं यावन्नवप्रकृत्यात्मकं सत्तास्थानं भवति, स्त्यानर्द्धित्रिकक्षये तु क्षीणमोहद्विचरमसमयं यावत् षट्प्रकृत्यात्मकं सत्तास्थानं भवति, निद्राद्विकक्षये पुनः क्षीणमोहचरमसमये चतुष्प्रकृत्यात्मकं सत्त्वस्थानं भवति। कषायचतुष्के वेदत्रिके च स्वस्वगुणस्थानपर्यन्तमुपशमकानामनिवृत्तिप्रथमभागं यावत् क्षपकाणां च नवप्रकृत्यात्मकं, तदनन्तरं क्षपकश्रेण्यां स्त्यानर्द्धित्रिकक्षये द्वितीयभागादारभ्य क्रोधादिक्षयपर्यन्तं षट्प्रकृत्यात्मकं च सत्तास्थानं भवति। एवं सामायिकच्छेदोपस्थापनीययोरपि क्रमेण वाच्यम्। केवलज्ञानदर्शनयोः दर्शनावरणस्य क्षीणत्वेन नास्ति सत्तास्थानमिति। सूक्ष्मसपराये उपशमकानां नवात्मकं क्षपकाणां च षडात्मकं स्थानं सूक्ष्मसपरायरूपे गुणस्थाने वाच्यम्॥

मनुष्यगतिपञ्चेन्द्रियजातित्रसकायकेवलज्ञानदर्शनयथाख्यातचारित्रभव्यसञ्ज्ञिक्षायिकसम्यक्त्वानाहारकेषु सातासातरूपप्रकृतिद्विकात्मकमयोगिद्विचरमसमयं यावद्भवति, अयोगिचरमसमये तु सातारूपमसातारूपं वा सत्त्वस्थानं भवति। मनुष्यगतिवर्जगतित्रिकैकेन्द्रियादिचतुष्कायकायपञ्चकाविरतयोगत्रिकवेदत्रिककषायचतुष्ककेवलज्ञानवर्जज्ञानचतुष्काज्ञानत्रिकयथाख्यातवर्जचारित्रषट्ककेवलदर्शनवर्जदर्शनत्रिकलेश्याषट्काभव्यमिथ्यात्वसासादनमिश्रक्षायोपशमोपशमसम्यक्त्वासञ्ज्ञ्याहारकेषु सातासातरूपद्विप्रकृत्यात्मकं भवतीति॥

॥ मार्गणासु ज्ञानदर्शनावरणान्तरायवेदनीयानामुत्तरप्रकृतिसत्स्थानयन्त्राणि ॥

| ६२ मार्ग०सु ज्ञाना० सत्स्थानानि। | |
|---|---|
| ६० (केवलद्विकवर्जं) सु—१—५ प्रकृत्यात्मकम् | |
| केवलद्विकयोः —० | |
| **मार्ग० सु दर्शना० सत्स्थानानि।** | |
| ३ अमनुजगति—४ जाति—५ स्था० काय—१ परिहार०—१ देशवि०—१ अवि०—५ प्रथमलेश्या—१ अभव्य—३ अज्ञान—५ अक्षायिकसम्य०—१ असंज्ञि—१ अनाहारक इति ३१ सु | ३—९ प्रकृत्यात्मकम्, स्वस्वगुणस्थानं यावत् |
| मनुज—पञ्चे०—त्रस—३ योग—४ज्ञान—यथा०—३ दर्शन—शुक्ल—भ०—क्षा०—सं-ज्ञि—आहा० इति १९ सु | ३—९ उपशान्तमोहं यावदुपशमकानाम्, अनि० प्र० भागं यावत्क्षपकाणां च। ६ क्षीणमोहोपान्त्यसमयं यावत्। ४ क्षीणमोहान्त्यसमये। |

| क्रोधादि४ वेद३ सामा० छेदोप० इति ९ सु | २—९ उपशमकानाम्, अनि० प्र० भागं यावत्क्षपकाणां च। क्षपकाणामनिवृत्तिद्वितीयभागादारभ्य क्रोधादिक्षयपर्यन्तम्। |
|---|---|
| सू० सपराये | २—९ उपशमकानाम् १० मे एव। ६ क्षपकाणां १० मे एव। |
| केवल२ कयोः— | ० |
| **६२ मार्ग० सु वेदनीयसत्स्थानानि।** | |
| मनुज—पञ्चे०—त्रस—केवल२—यथा०—भ०—संज्ञि—क्षा०—अना० इति १० सु | २—२ अयोग्युपान्त्यसमयं यावत्, १ अयोग्यन्त्यसमये च। |
| शेष ५२ सु १—२ प्र० आत्मकं स्वस्वगुणस्थानपर्यन्तम् | |

अथ मार्गणासु मोहनीयस्य सत्तास्थानानि उच्यन्ते—तत्र देवनारकयोः षट् सत्तास्थानानि भवन्ति, तद्यथा—अष्टाविंशतिः सप्तविंशतिः षड्विंशतिश्चतुर्विंशतिर्द्वाविंशतिरेकविंशतिरिति । तत्राष्टाविंशतिः कृतत्रिपुञ्जस्य चतुर्ष्वपि गुणस्थानेषु भवति । उद्वलितसम्यक्त्वस्य प्रथमतृतीयगुणस्थानयोः सप्तविंशतिः । उद्वलितमिश्रस्यानादिमिथ्यादृष्टेर्वा मिथ्यादृष्टौ षड्विंशतिः । विसयोजितानन्तानुबन्धिन तृतीयचतुर्थयोः गुणस्थानयोः चतुर्विंशतिप्रकृत्यात्मक सत्तास्थान भवति । तथा कश्चिन्नरः प्रथमसहननी मिश्रमोहक्षयानन्तरं कृतकरण काल कृत्वा चतसृष्वपि गतिषु अन्यतमस्या गच्छति, तत्र च यावत् सम्यक्त्वपुञ्जं क्षपयति तावत् द्वाविंशतिप्रकृतीना सत्तास्थान तुर्यगुणस्थाने भवति, क्षयानन्तर चैकविंशतिरिति । तिर्यग्गतावप्येवमेव, नवर पञ्चमगुणस्थाने त्रीणि—अष्टाविंशतिचतुर्विंशत्येकविंशतिरूपाणि भवन्ति, शेषाणि न सन्ति । मनुजगतिपञ्चाक्षजातित्रसकाययोगत्रिकशुक्ललेश्यासञ्ज्याहारकेषु स्वीये स्वीये गुणस्थाने यानि प्राग् उक्तानि सत्तास्थानानि तानि सर्वाणि वाच्यानि । प्रथमजातिचतुष्कत्रसकायवर्जकायपञ्चकासञ्ज्ञिषु मिथ्यादृष्टौ त्रीणि सत्तास्थानानि भवन्ति, तद्यथा—अष्टाविंशतिः, सप्तविंशतिः, षड्विंशतिरिति । सास्वादने अष्टाविंशतिरूपमेकमेव भवतीति । पुरुषवेदे पुरुषवेदक्षयानन्तरभावीनि पञ्चचतुस्त्र्येकप्रकृत्यात्मकानि वर्जयित्वा शेषाणि दश भवन्ति, तद्यथा—अष्टाविंशतिः, सप्तविंशतिः, षड्विंशतिः, चतुर्विंशतिः, त्रयोविंशतिः, द्वाविंशतिः, एकविंशतिः, त्रयोदश, द्वादश, एकादशेति । तत्र मिथ्यादृष्टौ त्रीणि भवन्ति, तद्यथा—अष्टाविंशतिः सप्तविंशतिः षड्विंशतिरिति । सास्वादने अष्टाविंशतिः । मिश्रे अष्टाविंशतिसप्तविंशतिचतुर्विंशतिरूपाणि त्रीणि भवन्ति । अविरतसम्यग्दृष्ट्यादिषु चतुर्ष्वष्टाविंशतिचतुर्विंशतित्रयोविंशतिद्वाविंशत्येकविंशतिरूपाणि पञ्च सत्तास्थानानि भवन्ति । अपूर्वकरणे अष्टाविंशतिचतुर्विंशत्येकविंशतिरूपाणि त्रीणि भवन्ति । अनिवृत्तिबादरे अष्टाविंशतिचतुर्विंशत्येकविंशतित्रयोदशद्वादशैकादशरूपाणि षट् भवन्ति । स्त्रीवेदे अष्टाविंशतिसप्तविंशतिषड्विंशतिचतुर्विंशतित्रयोविंशतिद्वाविंशत्येकविंशतित्रयोदशद्वादशरूपाणि नव सत्तास्थानानि भवन्ति । नपुसकवेदे च अष्टाविंशतिसप्तविंशतिषड्विंशतिचतुर्विंशतित्रयोविंशतिद्वाविंशत्येकविंशतित्रयोदशरूपाण्यष्टौ सत्त्वस्थानानि भवन्ति । वेदद्विकेऽपि गुणस्थानेषु भावना पुवेदवद्वाच्या । क्रोधे द्वादश सत्तास्थानानि भवन्ति, तद्यथा—अष्टाविंशतिः, सप्तविंशतिः, षड्विंशतिः, चतुर्विंशतिः, त्रयोविंशतिः, द्वाविंशतिः, एकविंशतिः, त्रयोदश, द्वादश, एकादश, पञ्च, चतस्रश्चेति । त्र्येकप्रकृत्यात्मकानि सत्तास्थानानि न सन्त्येव, क्रोधक्षयानन्तरभावित्वादिति । माने त्रयोदश सत्तास्थानानि भवन्ति, तद्यथा—अष्टाविंशतिः, सप्तविंशतिः, षड्विंशतिः, चतुर्विंशतिः, त्रयोविंशतिः, द्वाविंशतिः, एकविंशतिः, त्रयोदश, द्वादश, एकादश, पञ्च, चतस्र, तिस्रश्चेति । द्विप्रकृत्यात्मकमेकप्रकृत्यात्मक च न भवति, मानक्षयानन्तरभावित्वादिति । मायाया चतुर्दशसत्तास्थानानि भवन्ति, तद्यथा—अष्टाविंशतिः, सप्तविंशतिः, षड्विंशतिः, चतुर्विंशतिः, त्रयोविंशतिः, द्वावि-

शति', एकविंशति , त्रयोदश, द्वादश, एकादश, पञ्च, चतस्र , तिस्र , द्वे इति । लोभे सर्वाणि सत्तास्थानानि भवन्ति । चतुर्ष्वपि कषायेषु गुणस्थानेषु सत्तास्थानानि पूर्ववद्वाच्यानि, नवरं नवमगुणस्थाने सप्तविंशतिषड्विंशतित्रयोविंशतिद्वाविंशतिवर्जानि स्वीयस्वीयमार्गणोक्तानि सर्वाणि सत्तास्थानानि भवन्ति । मत्यादिज्ञानचतुष्कसामायिकच्छेदोपस्थापनीयेषु सप्तविंशतिषड्विंशतिवर्जानि शेषाणि त्रयोदश भवन्ति, तद्यथा–अष्टाविंशति', चतुर्विंशति , त्रयोविंशति , द्वाविंशति , एकविंशति , त्रयोदश, द्वादश, एकादश, पञ्च, चतस्र', तिस्र , द्वे, एका चेति । तत्र मत्यादित्रिके अविरतसम्यग्दृष्टेरारभ्य क्षीणमोहपर्यवसानानि नव गुणस्थानानि भवन्ति, मनःपर्यवज्ञाने प्रमत्तसंयतादारभ्य क्षीणमोहपर्यन्तानि सप्त गुणस्थानानि भवन्ति । सामायिकच्छेदोपस्थापनीययोः प्रमत्ताप्रमत्तापूर्वकरणानिवृत्तिबादराख्यानि चत्वारि गुणस्थानानि भवन्ति । तत्र सत्तास्थानानि गुणस्थानोक्तानि स्वयं वाच्यानि । अज्ञानत्रिके चत्वारि सत्तास्थानानि भवन्ति, तद्यथा–अष्टाविंशति , सप्तविंशति , षड्विंशति', चतुर्विंशतिश्चेति । तत्र प्रथमगुणस्थाने चतुर्विंशतिवर्जानि त्रीणि भवन्ति । सासादने अष्टाविंशतिरूपमेकमेव सत्तास्थानं भवति । मिश्रे च षड्विंशतिवर्जानि त्रीणि सत्तास्थानानि भवन्ति । केवलज्ञानदर्शनयोः मोहनीयस्य क्षीणत्वेन सत्तास्थानं न विद्यते । परिहारविशुद्धौ प्रमत्ताप्रमत्तयोः पञ्च सत्तास्थानानि भवन्ति, तद्यथा–अष्टाविंशति , चतुर्विंशति , त्रयोविंशति , द्वाविंशति , एकविंशतिश्चेति । देशविरतेऽपि परिहारविशुद्धिवत् पञ्च सत्तास्थानानि भवन्ति । यथाख्याते उपशान्तमोहगुणस्थाने त्रीणि सत्तास्थानानि भवन्ति, तद्यथा–अष्टाविंशतिश्चतुर्विंशतिरेकविंशतिरिति । क्षीणमोहादौ सत्तास्थानं नास्ति, मोहाभावादिति । अविरते सत्तास्थानानि सप्त भवन्ति, तद्यथा–अष्टाविंशति , सप्तविंशति , षड्विंशति , चतुर्विंशति , त्रयोविंशति , द्वाविंशति , एकविंशतिश्चेति । मिथ्यादृष्टावष्टाविंशतिसप्तविंशतिषड्विंशतिरूपाणि त्रीणि भवन्ति । सास्वादने अष्टाविंशतिर्भवति । मिश्रे अष्टाविंशतिसप्तविंशतिचतुर्विंशतिरूपाणि त्रीणि भवन्ति । अविरतसम्यग्दृष्टौ सप्तविंशतिषड्विंशतिवर्जानि पञ्च भवन्ति । सूक्ष्मसम्पराये चत्वारि सत्त्वस्थानानि भवन्ति, तद्यथा–अष्टाविंशतिश्चतुर्विंशतिरेकविंशतिरेका चेति ।

अवधिदर्शने मिथ्यादृष्ट्यादिषु द्वादशस्ववधिदर्शनविवक्षाया तु सर्वाणि मोहनीयस्य सत्तास्थानानि भवन्ति, अविरतसम्यग्दृष्ट्यादौ विवक्षणे तु सप्तविंशतिषड्विंशतिवर्जानि त्रयोदश सत्तास्थानानि भवन्ति । गुणस्थानेषु गुणस्थानोक्तानि सत्तास्थानान्यत्र भावनीयानि एवमेव चक्षुरचक्षुर्दर्शनयोरपि सत्तास्थानानि वाच्यानि, नवरं गुणस्थानानि द्वादशानि भवन्ति । तेज पद्मयोरष्टाविंशतिसप्तविंशतिषड्विंशतिचतुर्विंशतिद्वाविंशत्येकविंशतिरूपाणि षट् भवन्ति । तत्र मिथ्यादृष्टावष्टाविंशतिसप्तविंशतिषड्विंशतिरूपाणि त्रीणि भवन्ति । सासादने अष्टाविंशतिः भवति, मिश्रे अष्टाविंशतिसप्तविंशतिचतुर्विंशतिरूपाणि त्रीणि भवन्ति

अविरतसम्यग्दृष्टिदेशविरतप्रमत्ताप्रमत्तेषु सप्तविंशतिषड्विंशतिवर्जानि चत्वारि सत्तास्थानानि भवन्ति । ननु द्वाविंशतिप्रकृतिरूप सत्त्वस्थानं तेजःपद्मयो' कथं भवति ? तत्र क्षायिकसम्यक्त्वोत्पत्तेः प्राक् दर्शनमोहक्षपकस्य मिश्रमोहनीयक्षयानन्तर सम्यक्त्वमोहनीयं यावत् क्षपयति तावद्भवति, तदा च शुक्ललेश्यायामेव भवति, नान्यासु, अन्यथा त्रयोविंशतिप्रकृत्यात्मकमपि सत्तास्थानं स्यात्, मिथ्यात्वक्षयानन्तर यावत् मिश्रमोहनीयं न क्षपयति तावत् दर्शनमोहक्षपकस्य प्राप्यमाणत्वादिति चेत् ? न, कृतकरणस्यान्यतमस्या लेश्याया सद्भावात्, तदुक्तं कर्म्मप्रकृतिवृत्तौ–"चरमे च स्थितिखण्डे उत्कीर्णे सत्यसौ क्षपक' कृतकरण इति परिभाष्यते, तथा चाह–'कयकरणद्धाइ पच्छिमे होइ', पश्चिमे चरमे खण्डे उत्कीर्णे कृतकरणाद्धाया वर्तते कृतकरणो भवतीत्यर्थ । अस्या च कृतकरणाद्धाया वर्तमानः कश्चित्कालमपि कृत्वा चतसृणा गतीनामन्यतमस्या गतावुत्पद्यते, लेश्यायामपि पूर्वं शुक्लायामेवासीत्, सम्प्रति त्वन्यतमस्या गच्छति" इति । यत्रकेषु त्रयोविंशतिरूपमपि सत्तास्थानं स्वीकृतं तदभिप्रायेण कृतकरणाद्धाया' पूर्वमपि शुभलेश्यात्रिक स्वीकृतमिति । कृष्णनीलकापोताख्यासु षट् सत्तास्थानानि भवन्ति, तद्यथा–अष्टाविंशति., सप्तविंशतिः, षड्विंशति., चतुर्विंशतिः, द्वाविंशतिः, एकविंशतिश्चेति । तत्राद्यानि त्रीणि मिथ्यादृष्टौ भवन्ति । सासादने आद्यमेव भवति, मिश्रे अष्टाविंशतिसप्तविंशतिचतुर्विंशतिरूपाणि त्रीणि भवन्ति । अविरतसम्यग्दृष्टौ मतान्तरेण देशविरतप्रमत्तयोरपि अष्टाविंशतिचतुर्विंशत्येकविंशतिद्वाविंशतिरूपाणि चत्वारि भवन्ति ।

न च द्वाविंशतिरूपं प्रकृतिस्थानं न सभवतीति वाच्यम्, कृतकरणस्यान्यतमस्यां गतौ लेश्याया च गमनस्योक्तत्वात्, द्वाविंशतिप्रकृतिरूपस्य सत्त्वस्थानस्यापि चतसृष्वपि गतिषूक्तत्वाच्च, तदुक्तं कर्म्मप्रकृतिवृत्तौ न्यायाचार्यै–"द्वाविंशतिश्चतसृष्वपि गतिषु प्राप्यत" इति । ननु लेश्यायामपि पूर्वं शुक्लायामेवासीत् सम्प्रति त्वन्यतमस्या गच्छतीत्येव कर्मप्रकृतिवृत्तावुक्तं न तु षण्णामन्यतमस्यामिति कथमवसीयते अशुभासु द्वाविंशतिप्रकृतिरूपं सत्त्वस्थानं सभवतीति चेत् ? न, कृतकरणस्य नरकगतौ गमनस्योक्तत्वेन तत्राशुभलेश्यात्रिकस्यैव सद्भावात् । ननु यल्लेश्याया हि जन्तवो म्रियन्ते परभवेऽपि तल्लेश्यायामेवोत्पद्यन्ते, न पुनः पाश्चात्यभवान्त्यसमयेऽन्यो लेश्यापरिणामोऽन्यश्चागामिभवाद्यसमय इति, तदुक्त–"जल्लेसाइ दव्वाइ आयइत्ता काल करेइ तल्लेसेसु उववज्जइ" इति, ततः पूर्वभवे यैव कृतकरणस्य दर्शनक्षपकस्य लेश्या सैव नरकगतावुत्पत्तिसमयादन्तर्मुहूर्तं यावद्भवतु, तत ऊर्ध्वमशुभा इति चेत् ? न, नरतिरश्चामन्तर्मुहूर्ते शेषे आयुषि देवनरकसत्का लेश्याऽऽगच्छतीत्युक्तत्वात्, तदुक्त लघुसग्रहण्या–"तिरिनर आगामिभवे लेसाए अइगए सुरा निरया । पुव्वभवलेससेसे अतमुहुत्ते मरणमिंति ॥ १ ॥" इति ।

ननु तृतीया भूमिं यावत् क्षायिकसम्यग्दृष्टिर्गच्छति, तत्र च नीलकापोतरूपं लेश्याद्विकमेव भवति, न कृष्णलेश्या, तदुक्तम्–"दुसु काऊ तइआए काऊ नीला य नील पकाए" इति, धूमप्रभादिषु तिसृषु भूमिष्वेव कृष्णलेश्या, तत. कथं तत्र द्वाविंशतिप्रकृतिरूपं

सत्त्वस्थान सभवेदिति चेत् ? सत्यम्, भवनपत्यादिषु लेश्याचतुष्कस्य विद्यमानत्वेन तत्र दर्शनक्षपकस्य गमने न कोऽपि दोष इति ।

अभव्ये षड्विंशतिप्रकृत्यात्मकमेकमेव सत्तास्थानं भवति, अनादिमिथ्यादृष्टित्वादिति । भव्ये च सर्वाणि सत्त्वस्थानानि भवन्ति । सम्यक्त्वमार्गणायामौपशमिकसम्यग्दृष्टौ द्वे सत्तास्थाने भवत, तद्यथा—अष्टाविंशतिश्चतुर्विंशतिरिति । उपशमितानन्तानुबन्धिनोऽष्टाविंशति, विसयोजितानन्तानुबन्धिनश्च चतुर्विंशति. । औपशमिकसम्यग्दृष्टौ भवन्त्यष्टौ गुणस्थानान्यविरतसम्यग्दृष्टेरारभ्योपशान्तमोह यावदिति । अष्टस्वपि त एव द्वे सत्त्वस्थाने भवत इति । क्षायिकसम्यग्दृष्टौ नव सत्तास्थानानि भवन्ति, तद्यथा—एकविंशति , त्रयोदश, द्वादश, एकादश, पञ्च, चतस्र , तिस्र , द्वे, एका चेति । क्षायिकसम्यग्दृशामविरतसम्यग्दृष्टेरारभ्यायोगिकेवलिपर्यवसानान्येकादशगुणस्थानानि भवन्ति । तत्र अविरतेरारभ्यापूर्वकरणं यावदेकविंशतिप्रकृत्यात्मक सत्त्वस्थान भवति । नवमगुणस्थाने नवापि सत्त्वस्थानानि भवन्ति । सूक्ष्मसम्पराये एकमेकविंशतिश्च । उपशान्तमोहे चैकविंशतिप्रकृत्यात्मकमेव सत्त्वस्थानं भवति । क्षीणमोहादौ नास्त्येव सत्त्वस्थान, क्षीणमोहत्वादेवेति । क्षायोपशमिकसम्यग्दृष्टौ चत्वारि सत्त्वस्थानान्यविरतसम्यग्दृष्टेरारभ्याऽप्रमत्तान्त यावत् चतुर्ष्वपि भवन्ति, तद्यथा—अष्टाविंशतिः, चतुर्विंशति , त्रयोविंशति , द्वाविंशतिरिति । मिश्रसम्यक्त्वे त्रीणि सत्तास्थानानि भवन्ति, तद्यथा—अष्टाविंशति , सप्तविंशति , चतुर्विंशतिरिति । सासादन सम्यग्दृष्टावष्टाविंशतिप्रकृत्यात्मकमेकमेव सत्त्वस्थान भवति । मिथ्यादृष्टावष्टाविंशतिसप्तविंशतिषड्विंशतिरूपाणि त्रीणि भवन्ति । अनाहारकमार्गणाया षट् सत्त्वस्थानानि भवन्ति, तद्यथा—अष्टाविंशति सप्तविंशति षड्विंशतिश्चतुर्विंशतिर्द्वाविंशतिरेकविंशतिरिति । तत्र मिथ्यादृष्टावाद्यानि त्रीणि भवन्ति । सासादने आद्यमेव भवति । अनाहारके मिश्रगुणस्थानमेव न भवति । अविरतसम्यग्दृष्टौ सप्तविंशतिषड्विंशतिवर्जानि चत्वारि भवन्ति । देशविरतेरारभ्य क्षीणमोहपर्यन्तानि गुणस्थानान्येवानाहारके न भवन्ति । अन्तिमद्विके क्षीणमोहत्वात् सत्तास्थानानि न भवन्तीत्युक्तानि मार्गणाया मोहनीयस्य सत्तास्थानानि ।

॥ अथ ६२ मार्गे० मोहनीयसत्स्थानयन्त्राणि ॥

| | | |
|---|---|---|
| नरकगति देवगत्यो तिर्यग्गतौ च | –२८ कृतत्रिपुञ्जस्य | १ २ ३ ४ गुणेषु |
| | –२७ उद्व० सम्यक्त्वस्य | १–२ |
| | –२६ उद्व० मिश्रस्य नादि मिथ्यादृष्टेवा | १–मे |
| | –२४ विसयोजितानाम् | ३–४ |
| | –२२ कृतकरणचतुर्गतिकानाम् | ४ थे |
| | –२१ क्षा० सम्यग्दृशाम् | ४ थे |
| तिर्यग्गतौ | २१–२८–२४ पञ्चमगुणे | |

| | |
|---|---|
| मनुज–पञ्चे०–त्रस–योग ३ शुक्ल–भव्य–संज्ञि–चक्षुरच–क्षु–आहा० इति १२ सु | स्वस्वगुणस्थानोक्तवत् |
| ४ कुजाति ५ काय–मिथ्या०–असंज्ञि इति ११ सु | २८–२७–२६ प्रथमगुणे<br>२८ द्वितीयगुणे |
| पुवेदे | १०—२८–२७–२६–२४–२३–२२–२१–१३–१२–११ |
| | मिथ्यात्वे ३—२८–२७–२६ |
| | सास्वादने १—२८ |

| | |
|---|---|
| पुवेदे | मिश्रे ३—२८-२७-२४ |
| | अविरतादाप्रमत्तम् ५—२८-२४-२३ -२२-२१ |
| | अपूर्वे ३—२८-२४-२१ |
| | अनिवृत्तौ ६—२८-२४-२१-१३-१२-११ |
| स्त्रीवेदे | ९—२८-२७-२६-२४-२३-२२-२१-१३-१२ |
| | गुणस्थानेषु—पुवेदवत् |
| नपुसके | ८—२८-२७-२६-२४-२३-२२-२१-१३ गुणस्थानेषु—पुवेदवत् |

| | |
|---|---|
| क्रोधे १२— | २८-२७-२६-२४-२३-२२-२१-१३-१२-११-५-४ |
| माने १३— | २८-२७-२६-२४-२३-२२-२१-१३-१२-११-५-४-३ |
| मायायां १४— | २८-२७-२६-२४-२३-२२-२१-१३-१२-११-५-४-३-२ |
| लोभे १५— | २८-२७-२६-२४-२३-२२-२१-१३-१२-११-५-४-३-२-१ |

अत्र कषायेषु गुणस्थानवक्तव्यता पुवेदवत्, नवरं नवमे २७-२६-२३-२२ वर्जयित्वा स्वस्वमार्गणोक्तवत् ।

| | |
|---|---|
| ४ ज्ञान-सामा०-छेदोप० इति६षु १३ | -२८-२४-२३-२२-२१-१३-१२-११-५-४-३-२-१ |
| ३ अज्ञानेषु ४—२८-२७-२६-२४ | |
| २ केवलयो —० | |
| १ परिहारे ५-प्रमत्ते अप्रमत्ते च | —२८-२४-२३-२२-२१ |
| १ देशविरते ५—२८-२४-२३-२२-२१ | |
| १ यथाख्याते ३— | उपशान्तमोहे—२८-२४-२१ क्षीणमोहादौ—० |

| | |
|---|---|
| अविरते | ७—२८-२७-२६-२४-२३-२२-२१ |
| | मिथ्यात्वे ३—२८-२७-२६ |
| | सास्वादने १—२८ |
| | मिश्रे ३—२८-२७-२४ |
| | अविरते ५—२८-२४-२३-२२-२१ |

| | |
|---|---|
| सूक्ष्मसंपराये ४—२८-२४-२१-१ | |
| अवधिदर्शने १५-[ विभंगेन सह ] | २८-२७-२६-२४-२३-२२-२१-१३-१२-११-५-४-३-२-१ |
| [ विभंगरहिते ]—२७-२६- वर्जानि | |
| अत्रापि गुण० वक्तव्यता यथासंभवम् । | |

| | |
|---|---|
| तेजोलेश्यादि पञ्चके ६ | —२८-२७-२६-२४-२२-२१ |
| | मिथ्यात्वे ३—२८-२७-२६ |
| | सास्वादने १—२८ |
| | मिश्रे ३—२८-२७-२४ |
| | अविरतादाऽप्रमत्त यावत् ४ —२८-२४-२२-२१ |
| अशुभासु | अविरते [मतान्तरे ४-५-६ सु ] ४ -२८-२४-२२-२१ |

| | |
|---|---|
| अभव्ये १—२६ प्रकृतिरूपम् । | |
| उपशमे २—२८-२४ | |
| क्षायिके | ९—२१-१३-१२-११-५-४-३-२-१ |
| | ४ त ८ सु १—२१ |
| | ९ मे ९—२१-१३-१२-११-५-४-३-२-१ |
| | १० मे २—१-२१ |
| | ११ मे १—२१ |
| | १२-१३-१४ सु—० |
| क्षयोपशमे ४—२८-२४-२३-२२ [ ४ त ७ गुणेषु ] | |
| मिश्रे ३—२८-२७-२४ [ तृतीयगुणे ] | |
| सास्वादने १—२८ [ द्वितीयगुणे ] | |

| | |
|---|---|
| अनाहारे | ६—२८-२७-२६-२४-२२-२१ |
| | मिथ्यात्वे ३—२८-२७-२६ |
| | सास्वादने १—२८ |
| | मिश्रे—० [ अनाहारकत्वाभावात् ] |
| | अविरते ४—२८-२४-२२-२१ |
| | १३ १४ सु—० [ क्षीणमोहत्वात् ] |

अथ मार्गणास्वायुष्कर्मणः सत्त्वस्थानान्युच्यन्ते—मनुष्यतिर्यग्गत्योः आयुषः चत्वार्यपि सत्त्वस्थानानि भवन्ति । नरकगते देवायुर्वर्जानि त्रीणि भवन्ति । देवगते नरकायुर्वर्जानि त्रीणि भवन्ति । एकद्वित्रिचतुरिन्द्रियेषु तिर्यङ्मनुजायूरूपे द्वे एव सत्त्वस्थाने भवत, देवनारक्यो गमनाभावात् तत्सत्के न भवत इति । पञ्चेन्द्रियेषु चत्वार्यपि सत्त्वस्थानानि भवन्ति । पृथ्वीजलवनस्पतिकायेषु तिर्यङ्मनुजायूरूपे द्वे भवतः । तेजोवायुकायिकयोः तिर्यगायुरूपमेकमेव सत्त्वस्थान भवति, शेषगतित्रिके गमनाभावादिति । त्रसकायिके चत्वार्यपि सत्त्वस्थानानि भवन्ति । योगत्रिकवेदत्रिककषायचतुष्काज्ञानत्रिककेवलज्ञानवर्जज्ञानचतुष्काविरतदेशविरतसामयिकच्छेदोपस्थापनीयपरिहारविशुद्धिककेवलदर्शनवर्जदर्शनत्रिकलेश्याषट्कभव्याभव्यमिथ्यात्वसासादनमिश्रौपशमिकक्षायोपशमिकक्षायिकसञ्ज्ञ्यसञ्ज्ञ्याहारकानाहारकेषु चत्वारि सत्त्वस्थानानि भवन्ति । समयसत्तापेक्षया सूक्ष्मसम्पराययथाख्यातयोरपि चत्वारि भवन्ति, अन्यथा मनुजदेवायूरूपे द्वे भवत । केवलज्ञानदर्शनयोः मनुजायूरूपमेकमेव सत्तास्थान भवतीत्युक्तानि मार्गणास्वायुष्कर्मणः सत्तास्थानानि ।

॥ ६२ मार्गणास्वायुःसत्स्थानानि ॥

| |
|---|
| २ मनुजतिर्यग्गत्यो ४—सर्वाणि<br>नरके ३—देवायुर्वर्जितानि |
| देवगतौ ३—नरकायुर्वर्जितानि |
| ४ कुमातिषु २—तिर्यगायुर्नरायुश्च |
| पञ्चेन्द्रिये ४—सर्वाणि |
| ३ पृथ्व्यम्बुवनेषु २—ति० नरायुश्च |
| २ तेजोवाय्वो १—तिर्यगायु |
| त्रसकाये ४—सर्वाणि |
| सूक्ष्मसम्पराये } ४—[ समयसत्तापेक्षया ]<br>यथाख्याते } २—दे०-नरायु [ समयसत्तारहितम् ] |
| २ केवलयो १—नरायु |
| ५१ शेषमार्गणासु ४—सर्वाणि |

अथ मार्गणास्थानेषु नामकर्मणः सत्तास्थानान्युच्यन्ते—

नरकगतौ नाम्नः सामान्येन द्व्युत्तरशतपण्णवतिपञ्चनवतिरूपाणि त्रीणि सत्तास्थानानि भवन्ति । मिथ्यादृष्टावपि त्रीणि भवन्ति । सासादने पञ्चनवति मिश्रे द्व्युत्तरशतपञ्चनवतिरूपे द्वे भवतः । अविरतसम्यग्दृष्टौ च त्रीण्यपि भवन्ति । भावनात्वेन आहारकसप्तकजिननाम्नोरुभयो मिथ्यात्वे युगपत् सत्ताभावात् त्र्युत्तरशत न भवति, जिननामसत्त्वे द्व्युत्तरशतमाहारकसप्तकासत्त्वे पण्णवतिरुभयासत्त्वे पञ्चनवतिश्च भवतीति । देवगतौ नाम्न चत्वारि सत्तास्थानानि भवन्ति, तद्यथा—त्र्युत्तरशत, द्व्युत्तरशत, पण्णवति , पञ्चनवतिरिति । मिथ्यादृष्टौ त्र्युत्तरशतपण्णवतिवर्जे द्वे भवत । सासादने पञ्चनवति , मिश्रे द्व्युत्तरशतपञ्चनवतिरूपे द्वे भवत । तुर्यगुणस्थाने चत्वार्यपि सत्तास्थानानि भवन्ति। तिर्यग्गतौ पञ्च सत्तास्थानानि भवन्ति, तद्यथा—द्व्युत्तरशत, पञ्चनवति , त्रिनवति , चतुरशीतिः, द्व्यशीतिरिति । तत्र तिर्यक्षु जिननामसत्त्वेन त्र्युत्तरशत पण्णवतिरूप च न भवति, जिननामविरहे द्व्युत्तरशतमाहारकसप्तकाभावे च पञ्चनवति , देवद्विकोद्वलने तु त्रिनवति , नरकद्विकवैक्रियसप्तकोद्वलने तु चतुरशीति , मनुष्यद्विकोद्वलने तु द्व्यशीतिरिति। तत्र मिथ्यादृष्टौ पञ्चापि सत्त्वस्थानानि

भवन्ति । सासादने पञ्चनवतिः, मिश्राविरतदेशविरतानां द्व्युत्तरशतं पञ्चनवतिश्च भवतीति । मनुजगतावुद्वलनायोग्यद्व्यशीतिवर्जानि द्वादशसत्तास्थानानि भवन्ति, तद्यथा–त्र्युत्तरशतम्, द्व्युत्तरशतम्, षण्णवतिः, पञ्चनवतिः, त्रिनवतिः, नवतिः, एकोननवतिः, चतुरशीतिः, त्र्यशीतिः, द्व्यशीतिः, नव, अष्टाविति । तत्र सर्वप्रकृतिसमुदायरूपं त्र्युत्तरशतं, जिनहीनं द्व्युत्तरशतं, जिनयुतमाहारकसप्तकविहीनं षण्णवतिः, उभयविहीनं पञ्चनवतिः, क्षपकश्रेण्या नामत्रयोदशकक्षये त्वाद्यचतुष्कमेव यथाक्रम नवतिरेकोननवतिस्त्र्यशीतिर्द्व्यशीतिश्च भवति । कश्चिदेकेन्द्रियो देवद्विकमुद्वल्य मनुजेषु समुत्पन्नः तत्र च यावद्देवद्विक न बध्नाति तावत् त्रिनवतिः, स एव सनरकद्विकं वैक्रियसप्तकमुद्वल्य मनुष्येषु समागतः सन् देवद्विकसहित नरकद्विकसहित वा वैक्रियसप्तकं यावन्न बध्नाति तावत् चतुरशीतिः । तीर्थकरस्यायोगिकेवलिनो नव, सामान्यकेवलिनोऽष्टाविति । तत्र मिथ्यादृष्टौ पञ्च भवन्ति, तद्यथा–द्व्युत्तरशतं, षण्णवति, पञ्चनवति, त्रिनवतिः, चतुरशीतिश्चेति । सास्वादने मिश्रे च द्वे भवत, तद्यथा–द्व्युत्तरशतम्, पञ्चनवतिरिति । अविरतसम्यग्दृष्टेरारभ्यापूर्वकरणान्तेषु चत्वारि सत्त्वस्थानानि भवन्ति, तद्यथा–त्र्युत्तरशतम्, द्व्युत्तरशतम्, षण्णवतिः, पञ्चनवतिरिति । अनिवृत्तिबादरे सूक्ष्मसम्पराये चाष्टौ सत्त्वस्थानानि भवन्ति, तद्यथा–त्र्युत्तरशतम्, द्व्युत्तरशतम्, षण्णवतिः, पञ्चनवति, नवतिः, एकोननवतिः, त्र्यशीति, द्व्यशीतिरिति । उपशान्तमोहे चत्वारि भवन्ति, तद्यथा–त्र्युत्तरशतम्, द्व्युत्तरशतम्, षण्णवतिः, पञ्चनवतिरिति । क्षीणमोहे सयोगिकेवलिनि च नवत्येकोननवतित्र्यशीतिद्व्यशीतिरूपाणि चत्वारि भवन्ति । अयोगिकेवलिनि उपान्त्यसमयं यावत् क्षीणमोहोक्तानि चत्वारि, चरमसमये तु नवाष्टाविति ॥ ४ ॥

एकद्वित्रिचतुरिन्द्रियेषु तिर्यग्गतिवत् पञ्च सत्तास्थानानि भवन्ति । नवर मिथ्यात्वसास्वादनरूप गुणस्थानद्विक वाच्यम् । पञ्चाक्षेषु सर्वाणि सत्तास्थानानि मनुजगतिवद्वक्तव्यानि, नवर कश्चित्तेजसकायिको वायुकायिको वा मनुजद्विकमुद्वल्य पञ्चेन्द्रियेषु समागतोऽपर्याप्तावस्थायां यावत् मनुजद्विक न बध्नाति तावत द्व्यशीतिप्रकृत्यात्मक सत्त्वस्थानं भवति । यद्वा क्षपकश्रेण्या पञ्चनवतिसत्ताकस्य त्रयोदशक्षये द्व्यशीतिर्भवति ॥ ५ ॥

भूजलाग्निवायुवनस्पतिष्वेकेन्द्रियवद्वाच्यम् । नवर तेजोवायुषु मिथ्यादृष्टिगुणस्थानमेव भवति । त्रसकायिकेषु पञ्चेन्द्रियवदिति ॥ ६ ॥

मनोवाग्योगिषु दश सत्तास्थानानि भवन्ति, तद्यथा–त्र्युत्तरशतम्, द्व्युत्तरशतम्, षण्णवतिः, पञ्चनवति, त्रिनवति, नवति, एकोननवति, चतुरशीतिः, त्र्यशीति, उद्वलनायोग्यनजेद्व्यशीतिरिति । मनुजद्विकविहीन द्व्यशीतिप्रकृतिरूपं न भवति, अपर्याप्तावस्थाभावित्वात्, लब्ध्यपेक्षया तु भवत्यपि । नवाष्टरूपे तु न भवतः, अयोग्यवस्थाभावित्वात्तयोः । शेषाणि सत्तास्थानानि मनुजगतिवत् परिभावनीयानि । काययोगिषु मनोयोगिवत्, नवर मनुजद्विकविहीनमपि द्व्यशीतिरूप सत्तास्थानं भवति ॥ ७ ॥

वेदत्रिके कषायचतुष्के च काययोगिवद्वाच्यम् ॥ ७ ॥

मत्यादिज्ञानचतुष्के त्र्युत्तरशतद्व्युत्तरशतषण्णवतिपञ्चनवतिनवत्येकोनननवतित्र्यशीतिद्व्यशीतिरूपाण्यष्टौ भवन्ति । तत्राविरतसम्यग्दृष्टेरारभ्योपशान्तमोहगुणस्थानं यावदुपशमश्रेण्यां क्षपकश्रेण्यामनिवृत्तिबादरप्रथमभागं यावदाद्यानि चत्वारि सत्तास्थानानि भवन्ति । ततः क्षीणमोहं यावत् त्रयोदशप्रकृतिक्षये नवत्येकोननवतित्र्यशीतिद्व्यशीतिरूपाणि चत्वारि भवन्ति । मनःपर्यवज्ञाने प्रमत्तादारभ्य क्षीणमोहपर्यवसानानि गुणस्थानानि भवन्ति । मत्यादिज्ञानत्रिके अविरतसम्यग्दृष्टेरारभ्य क्षीणमोहपर्यन्तानि भवन्ति । केवलज्ञाने षड् सत्तास्थानानि भवन्ति, तद्यथा–नवतिः, एकोननवतिः, त्र्यशीतिः, द्व्यशीतिः, नव, अष्टौ चेति । तत्र सयोगिकेवलिनि अयोगिन्युपान्तसमयं च यावदाद्यानि चत्वारि, अन्त्यसमये च नवाष्टाविति । विभङ्गज्ञाने त्रीणि सत्तास्थानानि भवन्ति, तद्यथा–द्व्युत्तरशतम्, षण्णवतिः, पञ्चनवतिरिति । तत्र मिथ्यादृष्टौ त्रीणि भवन्ति । सासादनमिश्रयोः षण्णवतिवर्जे द्वे भवतः । मतिश्रुताज्ञानद्विके षड् भवन्ति, तद्यथा–द्व्युत्तरशतम्, षण्णवतिः, पञ्चनवतिः, त्रिनवतिः, चतुरशीतिः, द्व्यशीतिरिति । मिथ्यादृष्टौ षडपि भवन्ति । सासादनमिश्रयोः द्व्युत्तरशतपञ्चनवतिरूपे द्वे भवत इति ॥ ८ ॥

अविरते त्र्युत्तरशतद्व्युत्तरशतषण्णवतिपञ्चनवतित्रिनवतिचतुरशीतिद्व्यशीतिरूपाणि सप्त भवन्ति । तत्र मिथ्यादृष्टावाद्यविहीनानि षड् भवन्ति । सासादनमिश्रयोः द्व्युत्तरशतपञ्चनवतिरूपे द्वे भवतः । अविरतसम्यग्दृष्टौ त्र्युत्तरशतद्व्युत्तरशतषण्णवतिपञ्चनवतिरूपाणि चत्वारि भवन्ति। देशविरतपरिहारविशुद्धयोः त्र्युत्तरशतद्व्युत्तरशतषण्णवतिपञ्चनवतिरूपाणि चत्वारि भवन्ति। परिहारविशुद्धौ प्रमत्ताप्रमत्तरूपे द्वे गुणस्थाने भवतः। सामायिकच्छेदोपस्थापनीययोरष्टौ सत्तास्थानानि भवन्ति, तद्यथा–त्र्युत्तरशतम्, द्व्युत्तरशतम्, षण्णवतिः, पञ्चनवतिः, नवतिः, एकोननवतिः, त्र्यशीतिः, द्व्यशीतिरिति । तत्र प्रमत्ताप्रमत्तापूर्वकरणेष्वाद्यानि चत्वारि भवन्ति । अनिवृत्तिबादरेऽष्टावपीति । सूक्ष्मसम्पराये चानिवृत्तिबादरवदष्टौ भवन्ति । यथाख्यातचारित्रिण उपशान्तमोहे त्र्युत्तरशतद्व्युत्तरशतषण्णवतिपञ्चनवतिरूपाणि चत्वारि भवन्ति । क्षीणमोहे सयोगिकेवलिनश्च नवतिः, एकोननवतिः, त्र्यशीतिः, द्व्यशीतिरिति चत्वारि भवन्ति । अयोगिकेवलिनश्चत्वारि तान्येव नवाष्टौ चेति ॥ ७ ॥

चक्षुरचक्षुर्दर्शनयोः नवाष्टौ वर्जयित्वा शेषाणि दश भवन्ति, केवलं चक्षुर्दर्शने मनुजद्विकविहीनं द्व्यशीतिप्रकृत्यात्मकं न भवति । तत्र मिथ्यादृष्टौ द्व्युत्तरशतषण्णवतिपञ्चनवतित्रिनवतिचतुरशीतिरूपाणि पञ्च, अचक्षुर्दर्शने द्व्यशीतियुतानि षड् भवन्ति । सास्वादनादिषु मनुजगतिवद्वाच्यम् । अवधिदर्शनेऽष्टौ सत्तास्थानानि भवन्ति, तद्यथा–त्र्युत्तरशत, द्व्युत्तरशत, षण्णवतिः, पञ्चनवतिः, नवतिः, एकोननवतिः, त्र्यशीतिः, मनुजद्विकयुता द्व्यशीतिरिति । गुणस्थानेष्ववधिज्ञानवद्वाच्यम् । केवलदर्शने केवलज्ञानवद्वाच्यम् ॥ ४ ॥

आद्यलेश्यात्रिके सप्त सत्तास्थानानि भवन्ति, तद्यथा–त्र्युत्तरशतम्, द्व्युत्तरशतम्,

षण्णवतिः, पञ्चनवतिः, त्रिनवतिः, चतुरशीतिः, द्व्यशीतिरिति । तत्र मिथ्यादृष्टौ नीलकापोतयोः आद्यवर्जानि षड् भवन्ति । कृष्णलेश्याया मिथ्यात्वे त्र्युत्तरशतषण्णवतिवर्जानि पञ्च भवन्ति सास्वादनमिश्रयोः द्व्युत्तरशतपञ्चनवतिरूपे द्वे भवतः । अविरतसम्यग्दृष्टिदेशविरतप्रमत्तेषु त्र्युत्तरशतद्व्युत्तरशतषण्णवतिपञ्चनवतिरूपाणि चत्वारि भवन्ति । तेजःपद्मयोश्चत्वारि सत्तास्थानानि भवन्ति, तद्यथा–त्र्युत्तरशतम्, द्व्युत्तरशतम्, षण्णवतिः, पञ्चनवतिरिति । मिथ्यादृष्ट्यादित्रिके द्व्युत्तरशतपञ्चनवतिरूपे द्वे भवतः । अविरतसम्यग्दृष्टिदेशविरतप्रमत्ताप्रमत्ताख्येषु चतुर्षु गुणस्थानेषु चत्वार्यपि सत्तास्थानानि भवन्ति । शुक्लेश्याया त्र्युत्तरशतद्व्युत्तरशतषण्णवतिपञ्चनवतिनवत्येकोननवतित्र्यशीतिद्व्यशीतिरूपाण्यष्टौ भवन्ति । मिथ्यादृष्ट्यादित्रिके द्व्युत्तरशतपञ्चनवतिरूपे द्वे भवतः । अविरतसम्यग्दृष्टेरारभ्योपशान्तमोहं यावत् त्र्युत्तरशतद्व्युत्तरशतषण्णवतिपञ्चनवतिरूपाणि चत्वारि भवन्ति । अनिवृत्तिबादरे त्रयोदशक्षयानन्तरं नवत्येकोननवतित्र्यशीतिद्व्यशीतिरूपाणि चत्वारि सयोगिकेवलिनं यावत् भवन्ति ॥ ६ ॥

भव्ये द्वादशापि सत्तास्थानानि भवन्ति । अभव्ये चत्वारि भवन्ति, तद्यथा–पञ्चनवतिः, त्रिनवतिः, चतुरशीतिः, द्व्यशीतिरिति ॥ २ ॥

मिथ्यात्वे षड् भवन्ति, तद्यथा–द्व्युत्तरशतं, षण्णवतिः, पञ्चनवतिः, त्रिनवतिः, चतुरशीतिः, द्व्यशीतिरिति । सास्वादनसम्यग्दृष्टौ, द्व्युत्तरशतम्, पञ्चनवतिश्चेति । मिश्रदृष्टावप्येवमेव द्वे भवतः । क्षायोपशमिकसम्यग्दृष्टावविरतादिचतुर्षु गुणस्थानेषु चत्वारि सत्तास्थानानि भवन्ति, तद्यथा–त्र्युत्तरशतम्, द्व्युत्तरशतम्, षण्णवतिः, पञ्चनवतिरिति । औपशमिकसम्यग्दृष्टावविरतसम्यग्दृष्टेरारभ्योपशान्तमोहं यावत् क्षायोपशमिकवच्चत्वारि भवन्ति । क्षायिकसम्यग्दृष्टौ त्र्युत्तरशतद्व्युत्तरशतषण्णवतिपञ्चनवतिनवत्येकोननवतित्र्यशीतिद्व्यशीतिनवाष्टरूपाणि दश भवन्ति । तत्राविरतसम्यग्दृष्टेरारभ्यानिवृत्तिबादरसम्परायं यावदाद्यानि चत्वारि भवन्ति । अनिवृत्तिबादरे नामत्रयोदशक्षये तु नवत्यादीनि चत्वारि सयोगिकेवलिनं यावत् भवन्ति । अयोगिकेवलिनि नवत्यादीनि षड् भवन्तीति ॥ ६ ॥

सञ्ज्ञिनि मनोयोगवत् नाम्नः सत्तास्थानानि वाच्यानि, अयोग्यवस्थायामपि सञ्ज्ञित्वविवक्षणे नवाष्टरूपेऽपि भवतः । असञ्ज्ञिनि मिथ्यादृष्टौ पञ्च सत्तास्थानानि भवन्ति, तद्यथा–द्व्युत्तरशतम्, पञ्चनवतिः, त्रिनवतिः, चतुरशीतिः, द्व्यशीतिरिति । सास्वादने पञ्चनवतिरूपमेकमेव भवति ॥ २ ॥

आहारके नवाष्टौ वर्जयित्वा सर्वाणि सत्तास्थानानि भवन्ति । गुणस्थानेषु काययोगिवत् सर्वं वाच्यम् । अनाहारके द्वादशापि सत्तास्थानानि भवन्ति । मिथ्यादृष्टौ द्व्युत्तरशतषण्णवतिपञ्चनवतित्रिनवतिचतुरशीतिद्व्यशीतिरूपाणि षड् भवन्ति । सास्वादने पञ्चनवतिरूपमेकमेव भवति । अविरतसम्यग्दृष्टौ त्र्युत्तरशतद्व्युत्तरशतषण्णवतिपञ्चनवतिरूपाणि चत्वारि भवन्ति । सयोगिकेवलिनि नवत्येकोननवतित्र्यशीतिद्व्यशीतिरूपाणि चत्वारि

भवन्ति । अयोगिकेवलिनि पूर्वोक्तानि चत्वारि नवाष्टसहितानि भवन्ति ॥ २ ॥ इत्युक्तानि मार्गणास्थानेषु नामकर्मण सत्तास्थानानि ॥

॥ अथ मार्गणासु नाम्न' सत्स्थानानि ॥

| मार्गणा | कतिस्थानानि | सत्स्थानानि [नाम्न ] कस्मिन् गुणे |
|---|---|---|
| नरकगतौ | ३ | —१०२–९६–९५ [ ओघेन ] |
| | | मिथ्यात्वे ३—१०२–९६–९५ |
| | | सास्वादने १—९५ |
| | | मिश्रे २—१०२–९५ |
| | | अविरते ३—१०२–९६–९५ |
| देवगतौ | ४ | —१०३–१०२–९६–९५ |
| | | मिथ्यादृष्टौ २—१०२–९५ |
| | | सास्वादने १– ,, |
| | | मिश्रे २– १०२ ,, |
| | | अविरते ४—१०३–१०२–९६–९५ |
| तिर्यग्गतौ | ५ | —१०२–९५–९३–८४–८२ |
| | | मिथ्यात्वे–१०२–९५–९३–८४–८२ सा० १–९५ |
| | | ३–४–५ गुणेषु २—१०२–९५ |
| मनुजगतौ | १२ | –१०३–१०२–९६–९५–९३–९०–८९–८४–८३– २–९–८ |
| | | मिथ्यात्वे ५—१०२–९६–९५–९३–८४ |
| | | २–३ यो २—१०२–९५ |
| | | ४त ८पु ४—१०३–१०२–९६–९५ |
| | | ९–१० यो ८—१०३–१०२–९६–९५–९०–८९–८३–८२ |
| | | ११ मे ४—१०३—१०२–९६–९५ |
| | | १२–१३ यो ४—९०–८९–८३–८२ |
| | | १४ स्योपान्त्यसमय यावत् |
| | | १४ स्यान्त्यसमये—९–८ |
| ३कुज्ञानेषु | ५ | ओघे ५—१०२–९५–९३–८४–८२ १ मे २ ये च तिर्यग्गतिवत् |

| पञ्चेन्द्रिये | १२ | मनुजगतिवत् |
|---|---|---|
| पृथ्वी अप् वनस्पतिषु | ५ ४ | —१०२–९५–९३–८४–८२ [ ओघे १–२ योश्च ] तिर्यग्गतिवत् |
| तेजोवायवो | ५ | —१०२–९५–९३–८४–८२ [ ओघे –१ मे च ] |
| त्रसकाये | १२ | —मनुजगतिवत् |
| मनोयोगे वचनयोगे | ९ [ १० ] | –१०३–१०२–९६–९५–९३–९०–८९–८४–८३ ८२ वा कश्चित्यपेक्षया |
| काययोगे | १० | –मनोयोगवत् परं ८२ सहित |
| ३ वेदेषु | १० | ९–८ वर्जं सर्वाणि |
| ४कषायेषु | १० | ९–८ वर्ज शेषाणि |
| ३ मत्यादिषु | ८ | –१०३–१०२–९६–९५–९०–८९–८३–८२ |
| | | ४ त ११ सु ४–१०३–१०२–९६–९५ उपशमकेषु |
| | | ४त ९मस्य प्रथमभाग ४–१०३–१०२–९६–९५ क्षपकापेक्षया |
| | | ९ मस्य द्वितीयभागात् क्षीणमोह यावत् ४–९०–८९–८३–८२ |
| मन पर्यवे | ८ | –मत्यादिवत्, पर गुणस्थानानि ६ता१२ |
| केवलज्ञाने | ६ | –९०–८९–८३–८२–९–८ |
| | | १३ शे–१४ दो उपान्त्यसमय यावत् ४–९०–८९–८३–८२ |
| | | १४ तस्य चरमसमये २–९–८ |
| विभङ्गे | ३ | –१०२–९६–९५ मिथ्यात्वे ओघे च १०२–९५ सास्वादने |
| मत्यज्ञाने श्रुताज्ञाने | ६ | १०२–९६–९५–९३–८४–८२ओघे मिथ्यात्वे ६ ओघवत् |
| | | सास्वादने मिश्रे च २–१०२–९५ |

| | | |
|---|---|---|
| अविरते | ७ | १०३-१०२-९६-९५-९३-८४ ८२ |
| | | मिथ्यात्वे ६-१०३ वजानि शेषाणि |
| | | सास्वा॰मिश्रयो द्वे-१०२-९५ |
| | | सम्यक्त्वे चत्वारि १०३-१०२ ९६ ९५ |
| देशाविरते | ४ | १०३-१०२-९६-९५ पंचमगुणस्थाने एव |
| परिहारे | ४ | १०३-१०२-९६-९५[६-७गुणयो ] |
| सामायिके छेदोप॰ | ८ | ओघेन -१०३-१०२ ९६-९५ ९०-८९-८३-८२ ६-७-८-गुणेषु४-१०३-१०२-९६-९५ ९ मे ८-ओघवत् |
| सू संपराये | ८ | -सामायिकवत्, पर १० मे गुणे |
| यथाख्याते | ८ | - ,, |
| | | ११ मे ४ -देशविरतिवत् |
| | | १२-१३ यो ४-९०-८९-८३-८२ |
| | | १४ शे ६-९०-८९-८३-८२-९-८ |
| चक्षुषि अचक्षुषि | ९ १० | -८२-९-८ वर्जशेषाणि ९ |
| | | -९-८ वर्जशेषाणि १० |
| | | मिथ्यात्वे ५-१०२-९६-९५-९३-८४- चक्षुषि |
| | | ,, ६-१०२-९६-९५-९३-८४ -८२ अ॰चक्षुषि |
| | | २ यादिषु-मनुजगतिवत् द्वयो |
| अवधिद॰ | ८ | -१०३-१०२-९६-९५-९०-८९ -८३-८२ |
| | | ४ त १२ गुणेषु-अवधिज्ञानवत् |
| केवलद॰ | ६ | -केवलज्ञानवत् गुण॰ १३-१४ |
| ३कृष्णादि लेश्यासु | ७ | १०३-१०२-९६-९५-९३-८४ ८२ |
| | नी का | मिथ्यात्वे ६-१०३ वजानि शेषाणि |
| | कृ॰ | मिथ्या॰५-१०३,९६ वजानि |
| | | २-३ यो २-१०२-९५ |
| | | ४-५-६ पु ४-१०३-१०२-९६-९५ |
| २ तेज - पद्मयो | ४ | -१०३-१०२-९६-९५ |
| | | मिथ्यात्वे २-१०२-९५ |
| | | २-३ यो २-१०२-९५ |
| | | ४ ५ ६-७पु ४-१०३-१०२-९६ ९५ |



| | | |
|---|---|---|
| शुक्ले | ८ | १०३-१०२ ९६ ९५ ९० ८९ ८३ ८२ |
| | | मिथ्यात्वे-१०२-९५ |
| | | २-३ यो -१०२-९५ |
| | | ४ त ११ षु-१०३-१०२-९६-९५ उपशमकानाम् |
| | | ९ त १३ षु-९०-८३-८२ क्षपकाणाम् |
| भव्ये | १२ | -सर्वाणि मनुजगतिवत् |
| अभव्ये | ४ | -९५-९३-८४-८२ |
| मिथ्यात्वे | ६ | -१०२-९६-९५-९३-८४-८२ |
| सास्वादने | २ | १०२-९५ |
| मिश्रे | २ | -,, ,, |
| क्षयोप॰ | ४ | १०३-१०२ ९६-९५ [४ ५ ६ ७गुणेषु] |
| उपशमे | ४ | १०३ १०२ ९६ ९५[४त ११श यावत्] |
| क्षायिके | १० | १०३-१०२-९६-९५-९०-८९ ८३-८२-९-८ |
| | | ४ त ८ म यावत् ४-१०३-१०२-९६-९५- |
| | | ९-१० मे ८-१०३-१०२-९६-९५ -९०-८९-८३-८२ |
| | | ११मे४-१०३-१०२-९६-९५ |
| | | १२-१३-मे४-९०-८९-८३-८२ |
| | | १४ शे ६-९०-८९-८३-८२-९-८ |
| सञ्ज्ञिनि | ९ [११] | -मनोयोगवत् अयोगित्वविवक्षया |
| असञ्ज्ञि॰ | ५ | -१०२-९५-९३-८४-८२ मिथ्यात्वेऽपि पञ्च |
| | | सास्वादने १-९५ |
| आहारके | १० | -९-८ वजशेषाणि [ गुणेषु काययोगवत् ] |
| अनाहारे | १२ | -सर्वाणि |
| | | मिथ्यात्वे६ १०२ ९६ ९५ ९३ ८४ ८२ |
| | | सास्वादने १-९५ |
| | | अविरते ४-१०३-१०२-९६-९५ |
| | | सयोगिनि ४-९०-८९-८३-८२ |
| | | अयोगिनि६ ९०-८९-८३-८२-९-८ |

अथ गोत्रस्य सत्स्थानान्युच्यन्ते–देवनरकगत्यो' चतुर्ष्वपि गुणस्थानेषु गोत्रस्य द्विप्रकृ-
त्यात्मकमेकमेव सत्तास्थानं भवति। तिर्यग्गतौ मिथ्यादृष्टिगुणस्थाने द्विप्रकृतिरूपं नीच-
गोत्ररूपमेकप्रकृत्यात्मकं च भवति। सास्वादनादिषु चतुर्षु द्विप्रकृत्यात्मकमेकमेव भवति।
मनुजगतौ द्विप्रकृत्यात्मकमयोगिद्विचरमसमयं यावद्भवति, चरमसमये उच्चैर्गोत्ररूपमेकमेव
भवति ॥ ४ ॥ जातिपञ्चककायपञ्चकाययोगवेदत्रिककषायचतुष्कमतिश्रुताज्ञानाविरताचक्षुर्द-
र्शनाशुभलेश्यात्रिकभव्याभव्यमिथ्यात्वासंज्ञिसंज्ञ्याहारकानाहारकरूपासु त्रयस्त्रिंशन्मार्गणासु
तेजोवायुकायिकयोरुच्चैर्गोत्रोद्वलनानन्तरं ततो निर्गत्य चान्यासूक्तरूपासु मार्गणास्वागतस्य
मिथ्यादृष्टेः नीचगोत्ररूपमेकमेव सत्त्वस्थानं भवति। अन्येषां तु द्विप्रकृत्यात्मकं मिथ्या-
त्वादिषु सर्वेषु गुणस्थानेष्वेकमेव भवति। मार्गणासु गुणस्थानानि स्वयं वाच्यानि ॥३३॥
वाङ्मनोयोगमत्यादिज्ञानचतुष्कविभङ्गज्ञानयथाख्याताविरतवर्जचारित्रपञ्चकचक्षुरादिदर्श-
नद्विकशुभलेश्यात्रिकोपशमक्षयोपशमक्षायिकमिश्रसासादनरूपासु द्वाविंशतिषु मार्गणासु
मिथ्यादृष्टिषु गुणस्थानेषु सर्वत्र द्विप्रकृत्यात्मकमेकमेव सत्त्वस्थानं भवति ॥ २२ ॥ केवलज्ञा-
नकेवलदर्शनयथाख्यातचारित्रेषु गुणस्थानद्वयेऽपि द्विप्रकृतिरूपम्, अयोगिचरमसमये
उच्चैर्गोत्ररूपं च भवति ॥ ३ ॥ इत्युक्तानि मार्गणास्थानेषु गोत्रकर्मणः सत्तास्थानानि ॥

॥ मार्गणासु गोत्रसत्स्थानानि ॥

| | | |
|---|---|---|
| देव–नरकयो | २–उ०–नी० [ १–२–३–४ गुणेषु ] | |
| तिर्यग्गतौ | २–उ –नी० | मिथ्यात्वे |
| | १–नी० | |
| | २–उ०–नी० [ २ ३ ४ ५ गुणेषु ] | |
| मनुजगतौ | २–उ०–नी० अयोग्युपान्त्यसमयं यावत् | |
| | १–उ० अयोगिचरिमसमये | |
| ३३ मार्गणासु | २–उ०–नी० | मिथ्यात्वे |
| | १–नी० | |
| | २–उ०–नी० मिथ्यादृष्टिभिन्नासु | |
| मन–वचन–४ मत्यादि–विभंग–५ यथाख्याताविरतवर्जचा०–२चक्षुरादि–३ शुभलेश्या–५मिथ्यात्ववर्जसम्यक्त्व [ इति २२ ] षु | २–उ०नी० मिथ्यात्वादिषु | |
| केवलज्ञान–यथा० केवलदर्शन | २–उ०नी० १३–१४ गुणयो | |
| | १–उ० १४ शे चरमसमये | |

॥ मार्गणासु संक्रमप्रकृतय उच्यन्ते ॥

देवनरकगत्यो सामान्येन संक्रमे आयुश्चतुष्कवर्जं चतुष्पञ्चाशच्छतं भवति। तत्र मिथ्यादृष्टौ मिथ्यात्ववर्जं त्रिपञ्चाशच्छतं भवति। सास्वादने तदेवाहारकसप्तकं जिनसम्यक्त्वमिश्रवर्जं त्रिचत्वारिंशच्छतं भवति। मिश्रे तदेवाहारकसप्तकयुतमुच्चैर्गोत्रवर्जमेकोनपञ्चाशच्छतं भवति। अविरतसम्यग्दृष्टौ जिनमिश्रमिथ्यात्वयुतं तदेव द्विपञ्चाशच्छतं भवति। अयं च प्रकारः सौधर्मादिषु रत्नप्रभादित्रिके च विद्यते। भवनपतिव्यन्तरज्योतिष्केषु पङ्कादिषु चौघे जिनवर्जं त्रिपञ्चाशच्छतं, मिथ्यात्वे मिथ्यात्ववर्जं द्विपञ्चाशच्छतं, सास्वादने त्रिचत्वारिंशच्छतं मिश्रे एकोनपञ्चाशच्छतमविरते चैकपञ्चाशच्छतं भवति। तमस्तमाया सामान्येन त्रिपञ्चाशच्छतं भवति, मिथ्यादृष्टौ मिथ्यात्वनीचगोत्रवर्जं तदेवैकपञ्चाशच्छतं संक्रमे प्राप्यते। सास्वादने आहारकसप्तकसम्यक्त्वमिश्रवर्जं द्विचत्वारिंशच्छतं, मिश्रे चाहारकसप्तकनीचयुतमुच्चैर्गोत्रवर्जं तदेवैकोनपञ्चाशच्छतं

भवति । अविरते मिश्रमिथ्यात्वयुतमेकपञ्चाशच्छतं भवतीति ॥ २ ॥ तिर्यग्गतौ पङ्कादिवत् सर्वं वाच्यम्, नवरं पञ्चमगुणस्थानेऽविरतिगुणस्थानकवदिति ॥ १ ॥ मनुजगतौ गुणस्थानोक्ता सङ्क्रमप्रकृतयो वाच्याः ॥ १ ॥

प्रथमजातिचतुष्के, असञ्ज्ञिनि, भूजलतरुषु च सामान्येन जिनायुश्चतुष्टयवर्जं त्रिपञ्चाशच्छतं भवति । मिथ्यादृष्टौ मिथ्यात्ववर्जं द्विपञ्चाशच्छतं भवति । आहारकसप्तकोद्वलिते तु पञ्चचत्वारिंशच्छतं भवति । देवद्विकोद्वलनाया तु त्रिचत्वारिंशच्छतं भवति । युगपत् नरकद्विके वैक्रियसप्तके चोद्वलिते चतुस्त्रिंशच्छतं भवति,उद्वलितनरद्विकोच्चगोत्राणां तेजोवायुकायिकेभ्य आगतानां नरद्विकोच्चगोत्राणां यावत् बन्धावलिका न पूर्णा भवति तावत् गोत्रद्विकमनुजद्विकयोः यतः सङ्क्रमो न भवति ततस्त्रिंशदधिकं शतं भवति । सास्वादने जिननामदर्शनत्रिकायुश्चतुष्टयाहारकसप्तकवर्जं त्रिचत्वारिंशदधिकं शतं सङ्क्रमे प्राप्यते ॥ ८ ॥ तेजोवायुकायिकयोः सामान्ये मिथ्यादृष्टौ च मिथ्यात्वजिननामनीचगोत्रायुश्चतुष्टयवर्जमेकपञ्चाशच्छतं भवति, शेषं भूकायिकवदिति ॥२॥ पञ्चाक्षत्रसकायिकयोः मनुजगतिवदिति ॥२॥

योगत्रिकवेदत्रिककषायचतुष्कज्ञानचतुष्काज्ञानत्रिकाविरतदेशविरतसामायिकच्छेदोपस्थापनीयपरिहारविशुद्धिसूक्ष्मसम्परायथाख्यातचारित्रदर्शनत्रिकलेश्यापङ्कभव्यौपशमिकक्षायोपशमिकमिथ्यात्वसास्वादनमिश्रसञ्ज्ञ्याहारकानाहारकरूपासु द्विचत्वारिंशत् मार्गणासु स्वस्वगुणस्थानानुसारेण सङ्क्रमप्रकृतयो वाच्याः । यासु मार्गणासु यावन्ति गुणस्थानानि तासु तत्रोक्ताः सङ्क्रमप्रकृतयो वक्तव्याः ॥ ४२ ॥ केवलज्ञानदर्शनयोः नास्ति सङ्क्रमः, प्रतिग्रहाभावादिति ॥ २ ॥

क्षायिकसम्यग्दृष्टौ सामान्येनोच्चैर्गोत्रदर्शनसप्तकायुश्चतुष्कवर्जं षट्चत्वारिंशच्छतं भवति । अविरतादारभ्य प्रमत्तं यावदेवमेव भवति । अप्रमत्तादौ सातस्य सङ्क्रमो न भवति, प्रतिग्रहाभावात्, ततः अप्रमत्तापूर्वकरणयोः पञ्चचत्वारिंशच्छतं भवति । अनिवृत्तिकरणे यशःकीर्तेः सङ्क्रमो न भवति पतद्ग्रहाभावात्ततश्चतुश्चत्वारिंशच्छतं भवति । सूक्ष्मसम्पराये मोहनीयसङ्क्रमाभावेन त्रयोविंशत्यधिकं शतं भवति । उपशान्तादौ सङ्क्रमाभावः इति ॥ १ ॥

अभव्ये जिनाहारकसप्तकदर्शनत्रिकायुश्चतुष्टयवर्जं त्रिचत्वारिंशच्छतं भवतीति ॥ १ ॥ उक्ता मार्गणासु सङ्क्रमप्रकृतयः ॥

॥ मार्गणासु सङ्क्रमप्रकृतियन्त्रम् ॥

| | देव-नरकयोः १५४-आयु ४ वर्जं ओघेन |
|---|---|
| वैमानिक-नरकेषु | मिथ्यात्वे १५३-मिथ्या० वर्जं च |
| | सास्वा० १४३ -जिन-आ०-सम्य०-मिश्रवर्जं च |
| | मिश्रे १४९- आ० युतम्, उच्चैर्वर्जं च |
| | अविरते १५२-जिन-मिथ्या० मिश्रसहित १४९ |

| | |
|---|---|
| भव व्य ज्यो ३ ४ ५ कुट्टकेषु | ओघे १५३-जिनवर्जं, [ ४ आयुर्वर्जं च ] |
| | मिथ्यात्वे १५२-मिथ्या० वर्जं च |
| | सास्वा० १४३-जिन-आ०-सम्य०-मिश्रवर्जं च |
| | मिश्रे १४९-आ० युतम्, उच्चैर्वर्जं च |
| | अविरते १५१-मिथ्या० मिश्रसहित १४९ |

| मार्गणा | | |
|---|---|---|
| भवनपत्यादौ | ओघे १५२-जिनवर्जं, [ ४ आयुर्वर्ज च ] | |
| | मिथ्यात्वे १५१-मिथ्या० नीचैर्वर्जं च | |
| | सास्वादने१४२-आ०७ -सम्य०-मि० च | |
| | मिश्र १४९-उच्चैर्वर्जं आहा० ७ नीचैर्युत | |
| | अविरते १५१-मिश्र-मिथ्यात्वसहित | |
| तिर्यग्गतौ | ओघे १५३ | भवनपत्यादिवत् प्रकृतिमर्जन युक्तीकरण च |
| | मिथ्या० १५२ | |
| | सास्वा० १४३ | |
| | मिश्रे १४९ | |
| | अविरते १५१ | |
| | देशविरते १५१-अविरतवत् | |
| मनुजे | गुणस्थानोक्ता संक्रमप्रकृतय | |
| ४कुजाति | ओघे | १५३ जिन-४ आयुर्वज |
| १असंज्ञि | मिथ्यात्वे | १५२ मिथ्यात्ववर्जं |
| भू-जल तरु | .. | १४५, आहा० सप्तकोद्वलिते |
| | | १४३, देवद्विकोद्वलित |
| | | १३४, नारक २ वै० ७ कोद्वलिते |
| | | १३०, नर २-गोत्र २ वज |
| | सास्वा० १४१जिनाहा० दशम १ आयुः४वर्जं | |

| मार्गणा | | |
|---|---|---|
| तेजो-वायो | ओघे, मिथ्यात्वे | १५१, मिथ्या०-जिन-नीच-आयुः ४ वर्जं<br>१४५-१४३-१३४-१३० भूकायिकवत् |
| पचे० त्रसयो | मनुजगतिवत् • | |
| ४१ मार्गणासु | स्वस्वगुणस्थानोक्तसंक्रमानुसारेण | |
| केवल२के | ० संक्रमाभाव | |
| क्षायिके | ओघे,१४६ उच्चैगा०-दर्श०७-आयु ४वर्जं | |
| | ४ त ६, १४६ ओघवत् | |
| | ७-८ मे, १४५ सातवज | |
| | ९ मे, १४४ यशोवज | |
| | १० मे, १२३-२१ मोहनीयवर्जं | |
| | ११, १२, १३ १४, दो ■ संक्रमाभाव | |
| अभव्ये | १४३,जिन० आ०७ दर्श०३ आयुः ४ वर्जं | |

अथ मार्गणासु संक्रमस्थानान्युच्यन्ते—तत्र ज्ञानावरणान्तराययो केवलज्ञानदर्शनयथाख्यातचारित्रवर्जेष्वेकोनषष्टिमार्गणासु पञ्चपञ्चप्रकृत्यात्मकमेकैकमेव संक्रमस्थान यावत्सु स्वीयेषु स्वीयेषु गुणस्थानेषु भवति ॥ ५९ ॥ केवलज्ञानदर्शनयथाख्यातचारित्रेषु नास्ति संक्रमस्थानमिति ॥ ३ ॥

मनुजगतिवर्जगतित्रिकाद्यजातिचतुष्काद्यकायपञ्चकाज्ञानत्रिकाविरतदेशविरतपरिहारविशुद्धिकशुक्ललेश्यावर्जलेश्यापञ्चकाभव्यमिथ्यात्वसास्वादनमिश्रक्षायोपशमिकौपशमिकासंज्ञ्यनाहारकरूपासु मार्गणासु स्वीयेषु२ सर्वेषु गुणस्थानेषु नवप्रकृत्यात्मक दर्शनावरणस्य संक्रमस्थान प्राप्यते ॥ ३१ ॥ मनुजगतिपञ्चाक्षजातित्रसकाययोगत्रिकवेदत्रिककषायचतुष्ककेवलज्ञानवर्जज्ञानचतुष्कसामायिकच्छेदोपस्थापनीयसूक्ष्मसम्परायकेवलदर्शनवर्जदर्शनत्रिकशुक्ललेश्याभव्यक्षायिकसम्यक्त्वसंज्ञ्याहारकरूपासु मार्गणासु दर्शनावरणस्य नवप्रकृत्यात्मक षट्प्रकृत्यात्मक च संक्रमस्थान भवति । गुणस्थानेषु स्वय प्रागुक्तानुसारेण संक्रमस्थान परिभावनीयमिति । षट्प्रकृत्यात्मक च क्षपकश्रेण्यामनिवृत्तिकरणे स्त्यानर्द्धित्रिकक्षयानन्तर वक्तव्यमिति ॥ २८ ॥

-केवलज्ञानदर्शनयथाख्यातचारित्रेषु नास्ति संक्रमस्थानम्, प्रतिग्रहाभावादिति ॥ ३ ॥
-वेदनीयस्य केवलज्ञानदर्शनयथाख्यातचारित्रेषु संक्रमस्थान न भवति, साम्परायिक-

बन्धाभावेन प्रतिग्रहाभावादिति ॥३॥ सूक्ष्मसम्पराये असातवेदनीयरूपमेकमेव सङ्क्रमस्थानं भवति, सातवेदनीयस्य तु बध्यमानत्वेन तस्य प्रतिग्रहत्वादिति ॥ १ ॥ मनुजगतिपञ्चाक्षजातित्रसकाययोगत्रिकवेदत्रिककषायचतुष्ककेवलवर्जज्ञानचतुष्कसामायिकच्छेदोपस्थापनीयपरिहारविशुद्धिककेवलवर्जदर्शनत्रिकशुभलेश्यात्रिकभव्यक्षायोपशमिकौपशमिकक्षायिकसञ्ज्ञ्याहारकरूपासु मार्गणासु प्रमत्तं यावत् सातासातरूपे द्वे सङ्क्रमस्थाने भवतः । अप्रमत्तादावसातरूपमेकमेव सङ्क्रमस्थानं भवति, सातस्य तु बध्यमानत्वेन तस्य प्रतिग्रहभावात् सातरूपं सङ्क्रमस्थानं न भवतीति ॥ ३२ ॥ मनुजगतिवर्जगतित्रिकाद्यजातिचतुष्काद्यकायपञ्चकाज्ञानत्रिकाविरतदेशविरताशुभलेश्यात्रिकाभव्यमिथ्यात्वसासादनमिश्रासञ्ज्ञ्यनाहारकरूपासु मार्गणासु सातासातरूपे द्वे सङ्क्रमस्थाने भवतः ॥ २६ ॥

॥ मार्गणासु सङ्क्रमस्थानयन्त्राणि ॥

| ज्ञानावरणीये अन्तराये च | | |
|---|---|---|
| १केवल १यथा०षु | ०सङ्क्रमाभाव ( पतद्ग्रहाभावेन ) | |
| शेष ५९ षु | १–५ प्रकृत्यात्मकम् | |
| **दर्शनावरणीये** | | |
| ३ नरगतिवर्जगति–४ कुजाति–५ स्थावरकाय ३अज्ञान अविरत–देशवि०–परिहार–५आद्यलेश्या–अभव्य–५क्षायिकवर्जसम्य०–असञ्ज्ञि–अनाहारे [३१] षु | १–नवप्रकृत्यात्मकं स्वस्वसर्वगुणेषु | |
| केवलद्विके यथाख्याते च | ०सङ्क्रमाभाव पतद्ग्रहाभावेन | |
| शेष२८षु२ | ९ सर्वप्रकृत्यात्मक,१त १० गुणेषु शमकानां | |
| | ६स्त्या०३रहित क्षपकाणां नवमगुणत स्था० | |
| | ४ क्षयानन्तरम् | |
| **वेदनीये** | | |
| केवल–१यथा०षु | प्रतिग्रहाभावेन संक्रमाभाव | |
| ३ मनुजवर्जगति, ४कुजाति, ५ स्था० काय,३अज्ञान,अविरत,देशवि०,३कुलेश्या,अभ०,मिथ्या०,सास्वा०,मिश्र, अस०, अनाहार इति २६ षु | २ सातमसात च | |
| सू० संपराये | १ असातरूपम् | |
| शेष ३२ षु [ २–१ इति ] | २ सातमसात वा | १ त ६ गुणेषु |
| | १ असातमेव ७ त | १० गुणेषु |

मोहनीयस्य सङ्क्रमस्थानानि त्रयोविंशतिः भवन्ति, तद्यथा–सप्तविंशतिः, षड्विंशतिः, पञ्चविंशतिः, त्रयोविंशतिर्द्वाविंशतिरेकविंशतिर्विंशतिरेकोनविंशतिरष्टादश, चतुर्दश, त्रयोदश, द्वादशैकादश, दश, नवाष्टौ, सप्त, षट्, पञ्च, चतस्रः, तिस्रः, द्वे, एकप्रकृत्यात्मकं चेति ।

देवनारकतिर्यक्षु सामान्येन पञ्च सङ्क्रमस्थानानि भवन्ति, तद्यथा–सप्तविंशतिः, षड्विंशतिः, पञ्चविंशतिः, त्रयोविंशतिः, एकविंशतिरिति । मिथ्यादृष्टावाद्यानि चत्वारि सङ्क्रमस्थानानि भवन्ति। तत्र मिथ्यात्वस्य प्रतिग्रहत्वेन तद्व्यतिरिक्ता सप्तविंशतिः, सम्यक्त्वे उद्वलिते षड्विंशतिः, मिश्रे तूद्वलिते अनादिमिथ्यादृष्टेर्वा पञ्चविंशतिः, विसंयोजितानन्तानुबन्धिनः प्राप्तमिथ्यात्वस्यानन्तानुबन्धिमिथ्यात्वव्यतिरिक्ता त्रयोविंशतिरिति। सास्वादनमिश्रयोः पञ्चविंशतिः, दर्शनत्रिकस्य सङ्क्रमाभावात्। मिश्रे विसंयोजितानन्तानुबन्धिनश्चैकविंशतिरिति। अविरतसम्यग्दृष्टौ सप्तविंशतिषड्विंशतित्रयोविंशत्येकविंशतिरूपाणि चत्वारि सङ्क्रमस्थानानि भवन्ति । क्षायोपशमिकसम्यग्दृष्टेः सम्यक्त्वस्य प्रतिग्रहत्वेन तद्व्यतिरिक्ता सप्तविंशतिः, औपशमिकसम्यग्दृष्टेरावलिकाया अभ्यन्तरे वर्तमानस्य मिश्रसम्यक्त्ववर्जा

षड्विंशति, विसयोजितानन्तानुबन्धिन त्रयोविंशति'। क्षायिकसम्यग्दृष्टे नरकेषु वालुका-प्रभा यावत्, देवेषु चतुर्विधेष्वपि, तिर्यक्षु युगलिकेषु न शेषेष्वेकविंशतिप्रकृत्यात्मक सक्रमस्थान भवति। देशविरता तिरश्चा सप्तविंशतिषड्विंशतित्रयोविंशतिरूपाणि त्रीणि सक्रम-स्थानानि पूर्ववत् परिभावनीयानि। युगलिकतिर्यक्षु देशविरतेरभावादेशविरतावेकविंशति-प्रकृत्यात्मक सक्रमस्थान न भवतीति ॥ ३ ॥ मनुष्यगतिपञ्चाक्षजातित्रसकाययोगत्रिक-चक्षुरचक्षुर्दर्शनशुक्ललेश्याभव्यसञ्ज्याहारकरूपासु मार्गणासु सर्वाणि सक्रमस्थानानि भवन्ति। भावना तु प्रागुक्तगुणस्थानानुसारेण कर्तव्येति ॥ १२ ॥ जातिचतुष्ककायपञ्चकासञ्ज्यज्ञान त्रिकरूपासु मार्गणासु मिथ्यादृष्टौ सप्तविंशतिषड्विंशतिपञ्चविंशतिरूपाणि त्रीणि भवन्ति। यासा सास्वादनगुणस्थान स्यात् तासा तत्र पञ्चविंशतिप्रकृतिरूप सक्रमस्थान भवन्ति। अज्ञानत्रिके मिथ्यादृष्टौ त्रयोविंशतिप्रकृतिरूपमपि सक्रमस्थान स्यात्। मिश्रगुणस्थाने पञ्चविंशत्येकविंशतिरूपे द्वे सक्रमस्थाने भवत इति ॥ १३ ॥

मत्यादिज्ञानचतुष्कसामायिकच्छेदोपस्थापनीयावधिदर्शनरूपासु मार्गणासु पञ्चविंशति-रूप सक्रमस्थान न भवति। शेषाणि सक्रमस्थानानि स्वस्वगुणस्थानानुसारेण स्वय परि-भावनीयानि। अवधिदर्शने आद्यगुणस्थानत्रिकविवक्षणे तु पञ्चविंशतिरूप सक्रमस्था न भवत्यपि। मन पर्यवज्ञाने षड्विंशतिरूपमपि न भवति, प्राथमिकौपशमिकसम्यक्त्वो द्भवत्वाभावादेति ॥ ७ ॥ सूक्ष्मसम्परायययथाख्यातयोरुपशमश्रेण्या द्विप्रकृतिरूपमेकमेव सक्र मस्थान भवति, शेषाणि तु न भवन्तीति ॥ २ ॥ केवलज्ञानदर्शनयो' मोहनीयस्य सक्रम एव न भवति, क्षीणत्वात्, कुत स्थानचिन्तेति ॥ २ ॥ देशविरतपरिहारविशुद्धिकयो स्वस्वगुणस्थाने सप्तविंशतिषड्विंशतित्रयोविंशतिद्वाविंशत्येकविंशतिरूपाणि पञ्च सक्रम स्थानानि प्रागिव परिभावनीयानि। नवर परिहारविशुद्धौ षड्विंशतिरूपं सक्रमस्थान न भवति, प्राथमिकौपशमिकसम्यक्त्वोद्भवत्वात्तस्येति ॥ २ ॥

अविरते षट् सक्रमस्थानानि भवन्ति, तद्यथा—सप्तविंशति, षड्विंशति, पञ्चविंशतिः, त्रयोविंशति, द्वाविंशति, एकविंशतिरिति। तत्र मिथ्यादृष्टावाद्यानि चत्वारि, सास्वादने पञ्चविंशति, मिश्रे पञ्चविंशतिरेकविंशतिश्च, अविरतसम्यग्दृष्टौ सप्तविंशतिषड्विंशतित्रयो-विंशतिद्वाविंशत्येकविंशतिरूपाणि पञ्च भवन्ति। सर्वत्रापि भावना प्रागिव कर्तव्येति ॥ १ ॥

शुक्लवर्जलेश्यापञ्चके सप्तविंशतिषड्विंशतिपञ्चविंशतित्रयोविंशत्येकविंशतिरूपाणि पञ्च सक्रमस्थानानि भवन्ति। तत्र मिथ्यादृष्टौ सप्तविंशतिषड्विंशतिपञ्चविंशतित्रयोविंशतिरूपाणि चत्वारि भवन्ति। सास्वादने पञ्चविंशतिरूप सक्रमस्थान भवति। मिश्रे पञ्चविंशत्येकविंशति-रूपे द्वे भवत। अविरतादिष्वशुभलेश्यात्रिके क्षायोपशमिकसम्यग्दृष्टेरौपशमिकसम्यग्दृष्टेर्वा-वलिकाया ऊर्ध्वं सप्तविंशति सक्रामति, षड्विंशतिसक्रमस्थान तु न सभवति औपशमिकस म्यग्दृष्टेरावलिकाया अभ्यन्तरवर्तित्वात्, तत्र च शुभलेश्यात्रिकमेव सभवतीति सभावयामः, यतो यद्यपि औपशमिकसम्यक्त्वे षडशीतौ षडपि लेश्या उक्ता तथापि कर्मप्रकृत्यादौ

प्रथमसमयादारभ्यौपशमिकसम्यग्दृष्टिः गुणसक्रममन्तर्मुहूर्त्तं यावत् करोति ततश्च विध्यातसक्रम इत्युक्त, गुणसक्रमश्च प्रायेण प्रशस्ताध्यवसाये भवतीति । तेजःपद्मलेश्ययो षड्विंशतिसक्रमस्थानमौपशमिकसम्यग्दृष्टेर्भवति । एकविंशतिसक्रमस्थानं क्षायिकसम्यग्दृष्टेः कृतकरणस्य वा भवति । त्रयोविंशतिसक्रमस्थान विसयोजितानन्तानुबन्धिन उपशमितानन्तानुबन्धिनश्च भवति । मिथ्यात्वक्षये द्वाविंशतिसक्रमस्थानं शुक्ललेश्या विहाय नान्यासु भवतीति तथोक्तम् ॥ ५ ॥ अभव्ये पञ्चविंशतिरूपमेकमेव सक्रमस्थानं भवति ॥ १ ॥

मिथ्यात्वादित्रिके स्वस्वगुणस्थानोक्तानि सक्रमस्थानानि भवन्ति ॥ ३ ॥

क्षायोपशमिकसम्यक्त्वे चतुर्ष्वपि गुणस्थानेषु सप्तविंशतित्रयोविंशतिद्वाविंशत्येकविंशतिरूपाणि चत्वारि भवन्ति । तत्राष्टाविंशतिसत्ताकस्य सप्तविंशतिः, विसयोजितानन्तानुबन्धिन उपशमितानन्तानुबन्धिनो वा त्रयोविंशतिः, दर्शनक्षपकस्य मिथ्यात्वे क्षपिते द्वाविंशतिः, कृतकरणस्यैकविंशतिरिति ॥ १ ॥ औपशमिकसम्यग्दृष्टौ सप्तविंशतिषड्विंशतित्रयोविंशतिद्वाविंशत्येकविंशतिविंशतिचतुर्दशत्रयोदशैकादशदशाष्टसप्तपञ्चचतुर्द्विरूपाणि पञ्चदश भवन्ति । तत्राविरतादिषु चतुर्षु सप्तविंशतिषड्विंशतित्रयोविंशतिरूपाणि त्रीणि भवन्ति । अपूर्वकरणे त्रयोविंशतिरूपमेकमेव भवति । शेषाणि सर्वाण्यनिवृत्तिबादरे भवन्ति, भावना तूपशमसम्यग्दृष्टिमाश्रित्योपशमश्रेणिवत् कर्त्तव्या, सूक्ष्मसम्परायोपशान्तमोहयोः द्विप्रकृत्यात्मकमेकमेव भवतीति ॥१॥ क्षायिकसम्यग्दृष्टौ षोडश सक्रमस्थानानि भवन्ति, तद्यथा–एकविंशतिर्विंशतिरेकोनविंशतिरष्टादश त्रयोदश द्वादशैकादश दश नवाष्टौ षट् पञ्च चतस्रः तिस्रो द्वे एका चेति । भावना त्वनिवृत्तिबादरगुणस्थाने क्षायिकसम्यग्दृष्टिमाश्रित्योभयश्रेण्या कृतैवेति ॥ १ ॥

अनाहारकमार्गणाया सप्तविंशतिषड्विंशतिपञ्चविंशतित्रयोविंशत्येकविंशतिरूपाणि पञ्च सक्रमस्थानानि भवन्ति । तत्र मिथ्यादृष्टौ सप्तविंशतिषड्विंशतिपञ्चविंशतिरूपाणि त्रीणि भवन्ति । सास्वादने पञ्चविंशतिरूपम्, अविरते सप्तविंशतित्रयोविंशत्येकविंशतिरूपाणि त्रीणि भवन्ति ॥ १ ॥

नपुसकवेदे सप्तविंशतिषड्विंशतिपञ्चविंशतित्रयोविंशतिद्वाविंशत्येकविंशतिर्विंशतित्रयोदशद्वादशरूपाणि नव सक्रमस्थानानि भवन्ति । तत्र मिथ्यादृष्टौ सप्तविंशतिषड्विंशतिपञ्चविंशतित्रयोविंशतिरूपाणि चत्वारि सक्रमस्थानानि भवन्ति । सास्वादने पञ्चविंशतिरूपं सक्रमस्थानं भवति । मिश्रे पञ्चविंशत्येकविंशतिरूपे द्वे भवतः । अविरतादिषु चतुर्षु सप्तविंशतिषड्विंशतित्रयोविंशतिद्वाविंशत्येकविंशतिरूपाणि पञ्च भवन्ति । अपूर्वकरणे त्रयोविंशत्येकविंशतिरूपे द्वे भवतः । अनिवृत्तिकरणे त्रयोविंशतिद्वाविंशत्येकविंशतिविंशतित्रयोदशद्वादशरूपाणि षट् भवन्ति । भावना तु गुणस्थानोक्तानुसारेण सर्वत्र कर्तव्यैवमग्रेऽपीति ॥ १ ॥ स्त्रीवेदे सप्तविंशतिषड्विंशतिपञ्चविंशतित्रयोविंशतिद्वाविंशत्येकविंशतिविंशत्येकोनविंशतित्रयोदशद्वादशैकादशरूपाण्येकादशसक्रमस्थानानि भवन्ति । मिथ्यादृष्टेरारभ्यापूर्वक-

रण यावत् नपुसकवत् , एव पुवेदेऽपि । अनिवृत्तिबादरगुणस्थाने त्रयोविंशत्येकविंशतिविंश त्येकोनविंशतित्रयोदशद्वादशैकादशरूपाणि सप्त भवन्ति ॥ १ ॥ पुरुषवेदे सप्तविंशतिषड्वि शतिपञ्चविंशतित्रयोविंशतिद्वाविंशत्येकविंशतिविंशत्येकोनविंशत्यष्टादशत्रयोदशद्वादशैका दशदशरूपाणि त्रयोदशसक्रमस्थानानि भवन्ति । गुणस्थानभावना प्रागिव कर्त्तव्येति ॥ १ ॥

क्रोधे सप्तविंशतिषड्विंशतिपञ्चविंशतित्रयोविंशतिद्वाविंशत्येकविंशतिविंशत्येकोनविंशत्य ष्टादशचतुर्दशत्रयोदशद्वादशैकादशदशचतुस्त्रिरूपाणि षोडशसक्रमस्थानानि भवन्ति ॥ १ ॥ माने सप्तविंशतिषड्विंशतिपञ्चविंशतित्रयोविंशतिद्वाविंशत्येकविंशतिविंशत्येकोनविंशत्यष्टा दशचतुर्दशत्रयोदशद्वादशैकादशदशनवाष्टचतुस्त्रिद्विरूपाणि एकोनविंशति सक्रमस्थानानि भवन्ति ॥ १ ॥ मायालोभयो सर्वाणि सक्रमस्थानानि भवन्ति । कषायचतुष्केऽपि गुण स्थाने सक्रमस्थानभावना तु स्वस्वोदयपर्यन्तगुणस्थानोक्ता कर्त्तव्या ॥ २ ॥

आयुष सक्रमाभावात् न सक्रमस्थानचिन्तेति ।

## मार्गणासु मोहनीयसक्रमस्थानानि ॥

| | | |
|---|---|---|
| २३ स० स्थानानि -२७-२६-२५-२३-२२-२१-२०-१९-१८-१४-१३-१२-११-१० -९-८-७-६-५-४-३-२-१ इति | | |
| नरक देव तिर्यग् गतिषु | ओघेन ५-२७-२६-२५-२३-२१ | |
| | मिथ्यात्वे४ | २७ मिथ्या० वर्जिता |
| | | २६ सम्यक्त्वोद्वलिते, |
| | | २५अनादिमिथ्यादृशा,मिश्रोद्वलिते वा |
| | | २३ विसंयोजितानां सयोजना४वर्जित |
| | सास्वा०१ | २५ दर्शनत्रिकरहितम् |
| | मिश्रे २ | २५ दर्शनत्रिकरहितम् |
| | | २१ दर्शनसप्तकरहितम् |
| | अविरते ४ | २७ मिथ्या० रहित क्षयोपशमानाम् |
| | | २६ मिश्र-सम्य० वज,उप० सम्यग्दृशां आवलिकान्तर्गतानाम् |
| | | २३ विसयोजितां, ४सयोजनारहितम् |
| | | २१ क्षायिकाणां, १-२-३नरकेषु चतुर्विधदेवेषु युगलिकतिर्यक्षु च |
| | तिरश्चां देशविरते | ३-२७-२६-२३ उक्तवत् |

| | | |
|---|---|---|
| मनुज० त्रस,३ योग,चक्षु,अचक्षु, पचेन्द्रिय,शुक्ल, भव्य, सज्ञी, आहा० इति १२ मार्गणासु | २३ [ सर्वाणि स्थानानि ] | |
| कुमति ४, काय ५, असज्ञिषु [ १०षु ] | ओघे ३-२७, २६, २५ | |
| | मिथ्यात्वे३-२७, २६, २५ | |
| | सास्वादने १-२५ | |
| ३ अज्ञानेषु | ओघे मिथ्यात्वे च ४,२७-२६-२५-२३ | |
| | सास्वादने १-२५ | |
| | मिश्रे २-२५, २१ | |
| ३ ज्ञान,सामा०, छेदोप० अवधिदर्शनेषु [ ६ ] | ओघे२२-१७ वजस्थानि मिथ्यात्वादिषु गुणस्थानोक्त यथायोगम् [ अवधिदर्शन तु मिथ्यात्वादावपि विवक्षणे तत्र २५ रूप स्थानमपि ] | |
| मन पर्यवे ओघे २१-२५, २६ वर्जानि [ गुणविवक्षा गुणोघवत् ] | | |
| सू० सप०-यथा० यो [ क्षप० श्रेणौ ] | १-२ प्रकृतिरूपम् | |
| केवलद्विके | ० मोहनीयाभाव | |
| देशविरते | ५-२७, २६, २३, २२, २१ | |
| परिहारे | ४-२७, २३, २२, २१ | |

| | |
|---|---|
| अविरते | ओघे ६-२७, २६, २५, २३, २२, २१ |
| | मिथ्यात्वे ४-२७, २६, २५, २३ |
| | साम्वादने १-२५ |
| | मिश्र २-२५, २१ |
| | अविरते ५-२७, २६, २३, २२, २१ |
| ५ आद्य लेश्यासु | ओघे ५-२७, २६, २५, २३, २१ |
| | मिथ्यात्वे ४-२७, २६, २५, २३ |
| | साम्वादने १-२५ |
| | मिश्रे २-२५, २१ |
| | अविरतादिषु ४-२७-अशुभ ३ लेश्यासु, २७,२६-तेज पद्मयो ,२१क्षायिकस्य कृतकरणस्य वा, २३-क्षान्तविसयोजितसयोजनानाम |
| अभव्ये १-२५ | |
| मिथ्यात्व, सास्वा०, मिश्रे स्वस्वगुणस्थानोक्तानि | |
| क्षायोप० | ओघे ४-२७, २३, २२, २१ |
| | ४ त ७ पु ४-२७, २३, २२, २१ |
| उपशमे | ओघे १५-२७, २६, २३, २२, २१, २०, १४, १३, ११, १०, ८, ७,५,४, २ |
| | ४ तः ७ पु ३-२७, २६, २३ |
| | ८ मे १-२३ |
| | ९ मे १३-२३, २२, २१, २०, १४, १३, ११, १०, ८, ७, ५, ४, २ |
| | १०-११ द्वे १-२ |
| क्षायिके | ओघे १६-२१, २०, १९, १८, १३, १२, ११, १०, ९,८, ६, ५,४, ३,२, १ |
| | गुणेषु-भावना गुणस्थनोक्तवत् |

| | |
|---|---|
| अनाहारे | ओघे ५-२७, २६, २५, २३, २१ |
| | मिथ्यात्वे ३-२७, २६, २५ |
| | सास्वादने१-२५ |
| | अविरते ३-२७, २३, २१ |
| नपुसके | ओघे९ २७,२६,२५,२३,२२,२१,२०,१३,१२ |
| | मिथ्यात्वे ४-२७, २६, २५, २३ |
| | सास्वादने १-२५ |
| | मिश्रे २-२७, २१ |
| | ४ त ४ पु ५-२७, २६, २३, २२, २१ |
| | अपूर्वे २-२३, २१ |
| | अनिवृत्तौ ६-२३, २१, २२, २०, १३, १२ |
| स्त्रीवेदे | ओघे ९-२७, २६, २५, २३, २२, २१, २०, १९, १३, १२, ११ |
| | १ त ८ पु-नपुसकवत् |
| | ९ मे ७-२३, २१, २०, १९, १३, १२, ११ |
| पुवेदे | ओघे १३-२७, २६, २५, २३, २२, २१, २०, १९, १८,१३,१२, ११,१० |
| | १ त ८ गुणेषु-गुणस्थानोक्तवत् |
| | ९ मे-१०-२३,२२, २१,२०,१९,१८,१३, १२, ११, १० |
| क्रोधे | १६-२७,२६, २५,२३,२२,२१,२०, १९, १८, १४, १३, १२, ११, १०, ४, ३ |
| माने | १९-२७, २६, २५,२३,२२, २१, २०,१९, १८,१४,१३,१२,११,१०,९,८,४,३, २ |
| मायाया | २३-सर्वाणि |
| लोभे | २३-सर्वाणि [ सर्वेषु गुणभावना यथोक्ता ] |
| आयुषि | सक्रमाभावान्न सक्रमयन्त्रम् । |

अथ मार्गणासु नामकर्मण' सक्रमस्थानान्युच्यन्ते—

देवगतौ त्र्युत्तरशतद्व्युत्तरशतषण्णवतिपञ्चनवतिरूपाणि चत्वारि सक्रमस्थानानि भवन्ति। मिथ्यादृष्टिमिश्रयो' द्व्युत्तरशतपञ्चनवतिरूपे द्वे भवत. सास्वादने पञ्चनवतिः। अविरतगुणस्थाने तान्येव चत्वारि भवन्ति। नरकगतौ त्रीणि सक्रमस्थानानि भवन्ति, तद्यथा-द्व्युत्तरशत, षण्णवति , पञ्चनवतिरिति। सास्वादने पञ्चनवतिः। मिश्रे षण्णवतिवर्जे द्वे भवतः। मिथ्यात्वाविरतयोः त्रीण्यपि भवन्ति ॥ १ ॥ तिर्यग्गतौ पञ्च सक्रमस्थानानि

भवन्ति, तद्यथा-द्व्युत्तरशतं, पञ्चनवतिः, त्रिनवतिः, चतुरशीतिः, द्व्यशीतिरिति । तत्र मिथ्यादृष्टौ पञ्चापि भवन्ति, सास्वादने पञ्चनवतिः, मिश्रादित्रिके द्व्युत्तरशतपञ्चनवतिरूपे द्वे भवत ॥ १ ॥ मनुजगतौ मनुजद्विकयुतद्व्यशीतिप्रकृत्यात्मक सक्रमस्थान मुक्त्वा सर्वाणि सक्रमस्थानानि भवन्ति । गुणस्थानेषु प्रागिव वक्तव्यम् ॥ १ ॥

जातिचतुष्ककायपञ्चकरूपासु नवसु मार्गणासु तिर्यग्गतिवत् मिथ्यादृष्टौ पञ्च सक्रमस्थानानि भवन्ति । सास्वादने पञ्चनवतिरूपमेकमेव भवति ॥ ९ ॥ पञ्चेन्द्रियजातित्रसकायकाययोगवेदत्रिककषायचतुष्काचक्षुर्दर्शनभव्यसञ्ज्याहारकरूपासु चतुर्दशसु मार्गणासु सर्वाणि सक्रमस्थानानि भवन्ति । गुणस्थानेषु प्राग्गुणस्थानोक्तानि सक्रमस्थानानि स्वय परिभाव्यानि ॥ १४ ॥ मनोवाग्योगयोरपि द्व्यशीतिवर्जानि सर्वाणि सक्रमस्थानानि काययोगवत्परिभावनीयानि ॥ २ ॥

मतिश्रुताज्ञानयो पञ्च सक्रमस्थानानि मिथ्यादृष्टौ भवन्ति, तद्यथा-द्व्युत्तरशतं, पण्णवति, त्रिनवति, पञ्चनवति, चतुरशीति, द्व्यशीतिरिति । सास्वादनमिश्रयो द्व्युत्तरशत पञ्चनवतिरूपे द्वे भवतः ॥ २ ॥

विभङ्गज्ञाने मिथ्यादृष्टौ त्रीणि सक्रमस्थानानि भवन्ति, तद्यथा-द्व्युत्तरशत, पण्णवति पञ्चनवतिरिति । सास्वादनमिश्रयो पण्णवतिवर्जे द्वे भवत ॥ १ ॥ मत्यादिज्ञानत्रिकेऽविरतसम्यग्दृष्टौ देशविरतौ च चत्वारि सक्रमस्थानानि भवन्ति, तद्यथा-त्र्युत्तरशत, द्व्युत्तरशत, पण्णवति, पञ्चनवतिरिति । मत्यादिज्ञानचतुष्के प्रमत्तादारभ्यापूर्वकरणषष्ठभाग यावत् त्र्युत्तरशतद्व्युत्तरशतपण्णवतिपञ्चनवतिरूपाणि चत्वारि भवन्ति अपूर्वकरणसप्तमभागादारभ्य यावन्नामत्रयोदशक न क्षीयते तावत् द्व्युत्तरशतैकोत्तरशत पञ्चनवतिचतुर्नवतिरूपाणि चत्वारि भवन्ति । नामत्रयोदशकक्षयानन्तरमनिवृत्तिबाद सूक्ष्मसम्पराये च एकोननवत्यष्टाशीतिद्व्यशीत्येकाशीतिरूपाणि चत्वारि सक्रमस्थानानि भवन्ति । क्षीणमोहे प्रतिग्रहाभावात् सक्रमस्थानमेव नास्ति ॥ ४ ॥ केवलज्ञानेऽपि प्रतिग्रहाभावादेव सक्रमस्थान नास्ति ॥ १ ॥

अविरतमार्गणाया सप्त सक्रमस्थानानि भवन्ति, तद्यथा-त्र्युत्तरशत, द्व्युत्तरशत, पण्णवति, पञ्चनवतिः, त्रिनवति, चतुरशीति, द्व्यशीतिरिति । तत्र मिथ्यादृष्टावाद्यवर्जानि सक्रमस्थानानि भवन्ति । सास्वादनमिश्रयो द्व्युत्तरशतपञ्चनवतिरूपे द्वे भवत । अविरतसम्यग्दृष्टौ त्र्युत्तरशतद्व्युत्तरशतपण्णवतिपञ्चनवतिरूपाणि चत्वारि भवन्ति ॥ १ ॥ देशविरते चत्वारि सक्रमस्थानानि भवन्ति, तद्यथा-त्र्युत्तरशतद्व्युत्तरशतपण्णवतिपञ्चनवतिरूपाणि ॥ १ ॥ परिहारविशुद्धौ प्रमत्ताप्रमत्तयोरपि त्र्युत्तरशतद्व्युत्तरशतपण्णवतिपञ्चनवतिरूपाणि चत्वारि भवन्ति ॥ ॥ १ ॥ सामायिकच्छेदोपस्थापनीययो त्र्युत्तरशतद्व्युत्तरशतैकोत्तरशतपण्णवतिपञ्चनवतिचतुर्नवत्येकोननवत्यष्टाशीतिद्व्यशीत्येकाशीतिरूपाणि दश भवन्ति । तत्र प्रमत्तादपूर्वकरणषष्ठभाग यावत् त्र्युत्तरशतद्व्युत्तरशतपण्णवतिपञ्चनव

रूपाणि चत्वारि भवन्ति । अपूर्वकरणसप्तमभागादारभ्योपशमश्रेण्यां सूक्ष्मसम्परायं यावत् क्षपकश्रेण्यामनिवृत्तिप्रथमभागं यावत् द्व्युत्तरशतैकोत्तरशतपञ्चनवतिचतुर्नवतिरूपाणि चत्वारि भवन्ति । नामत्रयोदशक्षये त्वेकोननवत्यष्टाशीतिद्व्यशीत्येकाशीतिरूपाणि चत्वारि सूक्ष्मसम्परायं यावत् भवन्ति ॥ २ ॥ सूक्ष्मसम्परायचारित्रे द्व्युत्तरशतैकोत्तरशतपञ्चनवति-चतुर्नवत्येकोननवत्यष्टाशीतिद्व्यशीत्येकाशीतिरूपाण्यष्टौ भवन्ति ॥ १ ॥ यथाख्यातचारित्रे न सक्रमस्थानं, नाम्नो बन्धाभावेन पतद्ग्रहाभावादिति ॥ १ ॥

चक्षुर्दर्शने मनुजद्विकविहीनद्व्यशीतिवर्जानि सर्वाणि सक्रमस्थानानि भवन्ति । द्व्यशीतिवर्जनं तु शरीरपर्याप्तेरूर्ध्वमवश्यं मनुजद्विकबन्धसभवेनावलिकोर्ध्वंसक्रमस्य सद्भावादिति, तदुक्तं श्रीमलयगिरिपादैः सप्ततिकावृत्तौ–"तेजोवायुवर्जो हि शरीरपर्याप्त्या पर्याप्ता नियमतो मनुष्यगतिमनुष्यानुपूर्व्यौ बध्नन्ति" इति । मनोवाग्योगयोरपि द्व्यशीतिवर्जने कारणमेतदेवेति । गुणस्थाने तु सर्वत्र मनुजगतिवदिति ॥ १ ॥ अवधिदर्शने मतिज्ञानवदिति ॥ १ ॥ केवलदर्शने नास्ति सक्रमस्थानमिति ॥ १ ॥

अशुभलेश्यात्रिके सप्त सक्रमस्थानानि भवन्ति, तद्यथा–त्र्युत्तरशतं, द्व्युत्तरशतं, षण्णवतिः, पञ्चनवतिः, त्रिनवतिः, चतुरशीतिः, द्व्यशीतिरिति । मिथ्यादृष्टौ त्र्युत्तरशतवर्जानि षट् सक्रमस्थानानि भवन्ति । सास्वादनमिश्रयोः द्व्युत्तरशतपञ्चनवतिरूपे द्वे भवतः । अविरतादित्रिके आद्यानि चत्वारि भवन्ति ॥ ३ ॥ तेजःपद्मयोः षट् सक्रमस्थानानि भवन्ति, तद्यथा–त्र्युत्तरशतं, द्व्युत्तरशतं, षण्णवतिः, पञ्चनवतिः, त्रिनवतिः, चतुरशीतिरिति । मिथ्यादृष्टौ त्र्युत्तरशतषण्णवतिवर्जानि चत्वारि भवन्ति । सास्वादनमिश्रयोः द्व्युत्तरशतपञ्चनवतिरूपे द्वे भवतः । अविरतादिचतुष्के त्र्युत्तरशतद्व्युत्तरशतषण्णवतिपञ्चनवतिरूपाणि चत्वारि भवन्ति ॥ २ ॥ शुक्ललेश्याया मनुजद्विकविहीनद्व्यशीतिवर्जानि सर्वाणि सक्रमस्थानानि भवन्ति, गुणस्थाने मतिज्ञानवदिति ॥ १ ॥

अभव्ये पञ्चनवतित्रिनवतिचतुरशीतिद्व्यशीतिरूपाणि चत्वारि भवन्ति ॥ १ ॥

मिथ्यात्वसास्वादनमिश्ररूपासु तिसृषु मार्गणासु स्वस्वगुणस्थानकवद्वाच्यम् ॥ ३ ॥ क्षायोपशमिकसम्यग्दृष्टावविरतादिचतुष्केऽपि त्र्युत्तरशतद्व्युत्तरशतषण्णवतिपञ्चनवतिरूपाणि चत्वारि भवन्ति ॥ १ ॥ औपशमिकसम्यग्दृष्टौ षट् सक्रमस्थानानि भवन्ति, तद्यथा–त्र्युत्तरशतं, द्व्युत्तरशतं, एकोत्तरशतं, षण्णवतिः, पञ्चनवतिः, चतुर्नवतिरिति । अविरतसम्यग्दृष्टेरारभ्यापूर्वकरणषष्ठभागं यावत् त्र्युत्तरशतद्व्युत्तरशतषण्णवतिपञ्चनवतिरूपाणि चत्वारि सक्रमस्थानानि भवन्ति । अपूर्वकरणसप्तमभागादारभ्य सूक्ष्मसम्परायं यावत् द्व्युत्तरशतैकोत्तरशतपञ्चनवतिचतुर्नवतिरूपाणि चत्वारि सक्रमस्थानानि भवन्ति । उपशान्तमोहे सक्रमस्थानं न भवति, बन्धाभावेन प्रतिग्रहाभावादिति ॥ १ ॥ क्षायिकसम्यग्दृष्टौ दश सक्रमस्थानानि भवन्ति, तद्यथा–त्र्युत्तरशतं, द्व्युत्तरशतं, एकोत्तरशतं, षण्णवतिः, पञ्चनवतिः, चतुर्नवतिः, एकोननवतिः, अष्टाशीतिः, द्व्यशीतिः, एकाशीतिरिति । गुणस्थानेषु

मतिज्ञानवत् सक्रमस्थानानि वाच्यानि । उपशान्तादिषु सक्रमस्थान नास्तीति ॥ १ ॥
अस‌ज्ञिनि द्व्युत्तरशतपञ्चनवतित्रिनवतिचतुरशीतिद्व्यशीतिरूपाणि पञ्च सक्रमस्थानानि मिथ्यादृष्टौ भवन्ति । सास्वादने पञ्चनवतिरूप भवतीति ॥ १ ॥ अनाहारमार्गणाया द्व्युत्तरशतषण्णवतिपञ्चनवतित्रिनवतिचतुरशीतिद्व्यशीतिरूपाणि षड् मिथ्यादृष्टौ भवन्ति । सास्वादने पञ्चनवतिरूप भवतीति । अविरतसम्यग्दृष्टौ त्र्युत्तरशतद्व्युत्तरशतषण्णवतिपञ्चनवतिरूपाणि चत्वारि भवन्ति ॥ १ ॥ इत्युक्तानि नामकर्मण सक्रमस्थानानि ।

॥ मार्गणासु नामकर्मसक्रमस्थानयन्त्राणि ॥

| | |
|---|---|
| | ३-१०२, ९६, ९५ ओघे |
| | मिथ्यात्वे १०२, ९६, ९५ |
| | ९५ मिश्रे १०२, ९५ |
| | अविरते १०२, ९६, ९५ |
| देवगतौ | ओघे ४-१०३, १०२, ९६, ९५ |
| | १-३ गुणयो २-१०२, ९५ सा० ९५ |
| | ४ थे ४-१०३, १०२, ९६, ९५ |
| तिर्यग्गतौ | ओघे ५-१०२, ९५, ९३ ८४, ८२ |
| | मिथ्यात्वे ५-१०२, ९५, ९३, ८४, ८२ |
| | २ त ५ सु २-१०२, ९५ सा० ९५ |
| मनुष्यगतौ | ओघे ११-८२ पर्यन्तानि मि० ५-१०२, ९६, ९५, ९३, ८४, शेषगुणस्थानेषु गुणस्थानोक्तवत् । |
| ४ जाति ५ कायेषु | ओघे मिथ्या० च ५-१०२, ९५, ९३, ८४, ८२ सास्वा० १-९५ |
| पञ्चे०, त्र०, काययोग, ३ वेद, ४ कषाय, अचक्षु, भव्य, सज्ञि, आ० [ १४ ] सु | १२-सर्वाणि [ गुणस्थान भावनास्तु गुणस्थानोक्तवत् |
| मनोवचनयो | ११-८२ पर्यन्तानि शेष गुणस्थानोक्तवत् |
| मति-श्रुत ज्ञानयो | ओघे ६-१०२, ९६, ९५, ९३, ८४, ८२ |
| | मिथ्यात्वे ६-ओघवत् |
| | सा०-मिश्रयो २-१०२, ९५ |
| विभंगे | ओघे, मिथ्यात्वे च ३-१०२, ९६, ९५ |
| | सा०-मिश्रयो २-१०२, ९५ |

| | |
|---|---|
| मति श्रुता वधिषु | ओघे १०-१०३, १०२, ९६, ९५, १०१, ९४, ८९, ८८, ८२, ८१ |
| | ४-६ मयो ४-१०३, १०२, ९६, ९५ |
| | ८ त १२ सु-मन पर्यववत् |
| मन पर्यवे | ओघे १०-१०३, १०२, ९६, ९५, १०१, ९४, ८९, ८८, ८२, ८१ |
| | ६ त ८मस्य षष्ठभाग ४-१०३, १०२, ९६, ९५ |
| | ९ त ९ से त्रयोदशक्षयात् प्राग् ४-१०२, १०१, ९५, ९४ |
| | ९ मे, १० मे च त्रयोदशक्षयात् तरम् ४-८९, ८८, ८२, ८१ |
| केवलज्ञाने केवलदर्शने | सक्रमाभावात् |
| अविरते | ओघे ७-१०३, १०२, ९६, ९५, ९३, ८४, ८२ |
| | मिथ्यात्वे ६-१०२ पर्यन्तानि |
| | सा०-मिश्रयो २-१०२, ९५ |
| | सम्यक्त्वे ४-१०३, १०२, ९६, ९५ |
| देशविरते | ४-१०३, १०२, ९६, ९५ |
| परिहारे | ६-७ मे ४-१०३, १०२, ९६ ९५ |
| सामा० छेदोप० यो | ओघे १०-१०३, १०२, १०१, ९६, ९५, ९४, ८९, ८८, ८२, ८१ |
| | ६ त ८ मे ४-१०३, १०२, ९६, ९५ |
| | ८ त १०मे४-१०२, १०१, ९५, ९४ उपशमके |
| | ८ त ९ मे ४- ,, ,, ,, ,, क्षपके |
| | ९ त १० मे ४-८९, ८८ ८२, ८१ क्षपके |
| सू० संपराये | [१०में] ८ १०२, १०१, ९५, ९४, ८९, ८८, ८२, ८१ |

| | |
|---|---|
| यथाख्याते | ०क्रमो बन्धाभावेनापतद्ग्रहत्वात् न सक्रम |
| चक्षुर्दर्शने | ओघे ११-८२ वर्जसर्वाणि |
| | गुणेषु-मनुजगतिवत् |
| अवधिदर्शने | १०-मतिज्ञानवत् |
| कृष्ण नील कापोतेषु | ओघे ७-१०३,१०२,९६,९५,९३,८४,८२ |
| | मिथ्यात्वे ६-१०३ वर्जान्योघवत् |
| | सास्वा० मिश्रयो २-१०२, ९५ |
| | ४-५-६ षु १०३, १०२, ९६, ९५ |
| तेजः-पद्मयो | ओघे ४-१०३, १०२, ९६, ९५, |
| | मिथ्यात्वे २-१०२, ९५ |
| | सा०-मिश्रयो २-१०२, ९५ |
| | ४-५-६-७ मे ४-१०३, १०२, ९६, ९५ |
| शुक्ले | ११-८२ वर्जसर्वाणि गुणेषु मतिज्ञानवत् |
| अभव्ये | ४-९५, ९३, ८४, ८२ |
| मिथ्या०-सा०-मिश्रेषु | स्वस्वगुणस्थानवत् |
| क्षयोपशमे | ४ त ७ गुणेषु ४-१०३, १०२, ९६, ९५ |
| उपशमे | ओघे ६-१०३, १०२, १०१, ९६, ९५, ९४ |
| | ४ त ७ मे ४-१०३, १०२, ९६, ९५ |
| | ८ त १० मे ४-१०२, १०१, ९५, ९४ |
| | ११ मे ० न सक्रम बन्धाभावेनापतद्ग्रहत्वात् |
| क्षायिके | ओघे १०-१०३, १०२, १०१, ९६, ९५, ९४, ८९, ८८, ८२, ८१ |
| | गुणेषु-मतिज्ञानवत् |
| असज्ञिनि | ओघे ५-१०२, ९५, ९३, ८४, ८२ |
| | मिथ्यात्वे ५-,, ,, ,, ,, ,, |
| | सास्वादने १-९५ |
| अनाहारे | ओघे ७-१०३,१०२,९६,९५,९३,८४,८२ |
| | मिथ्यात्वे ६-त्र्युत्तरशतवर्जाण्योघवत् |
| | सास्वादने २-१०२, ९५ |
| | ४ र्थे ४-१०३, १०२, ९६, ९५ |

गोत्रस्य यथाख्यातकेवलद्विकरूपासु तिसृषु मार्गणासु सक्रम एव न भवति, बन्धाभावेन पतद्ग्रहाभावादिति ॥ ३ ॥ केवलज्ञानवर्जज्ञानचतुष्कावधिदर्शनदेशविरतसामायिकच्छेदोपस्थापनीयपरिहारविशुद्धिकसूक्ष्मसम्परायौपशमिकक्षायोपशमिकक्षायिकमिश्रसम्यक्त्वरूपासु मार्गणासु निजनिजगुणस्थानेषु नीचगोत्ररूपमेकमेव सक्रमस्थानं बध्यमाने उच्चैर्गोत्रे सक्रामति । एतासु मार्गणासूच्चैर्गोत्रस्य सक्रमो न भवति, नीचगोत्रस्य बन्धाभावेन प्रतिग्रहाभावादिति ॥१४॥ तेजोवायुकायिकयोस्तूच्चैर्गोत्र सक्रामति, न नीचगोत्रम्, उच्चैर्गोत्रस्य बन्धाभावेन प्रतिग्रहाभावात् । तदपि तावत्सक्रामति यावदुच्चैर्गोत्रं नोद्वलयति, उद्वलिते तु सक्रमाभावः ॥ २ ॥ गतिचतुष्केन्द्रियपञ्चकगतिनसवर्जकायचतुष्कयोगत्रिकवेदत्रिककषायचतुष्काज्ञानत्रिकाविरतचक्षुरचक्षुर्दर्शनलेश्यापट्कभव्याभव्यमिथ्यात्वसास्वादनसज्ञ्यसज्ञ्याहारकानाहारकरूपासु मार्गणासु निजनिजगुणस्थानेषूच्चैर्गोत्र नीचैर्गोत्र वा उभयमपि सक्रामति, तत्र मिथ्यात्वसास्वादनयो परावर्तमानेन गोत्रद्विकं सक्रामति, मिश्रादौ नीचगोत्रमेव सक्रामति नोच्चैर्गोत्र, नीचगोत्रस्य बन्धाभावेन प्रतिग्रहाभावादिति ॥ ४२ ॥

॥ मार्गणासु गोत्रस्य सक्रमस्थानम् ॥

| | |
|---|---|
| १ यथा०-केवल २ केषु | ०सक्रमाभाव |
| ४ ज्ञान, अवधिद०, देशवि०, सामा०, छेदोप०, परिहार, सू० सप०, उप०, क्षयोप०, क्षा०, मिश्रेषु [ १४षु ] | १-नीचैर्गोत्रम् [गुणस्थानेष्वप्यन्यत्र च स्वय परिभावनीयम्] |
| तेजो-वाय्वो | १ उच्चैर्गोत्रम् |
| शेष ४२ षु | १ नीचैरुच्चैर्गोत्र वा द्विविकल्पम् |

अथ मार्गणासु संक्रमस्थानप्रतिग्रहस्थानानां संवेधः उच्यते–तत्र केवलज्ञानदर्शनयथाख्यातचारित्रेषु ज्ञानावरणान्तराययोः संक्रमस्थानं नास्ति, बन्धाभावेन प्रतिग्रहाभावात्। शेषास्वेकोनषष्टिमार्गणासु ज्ञानावरणान्तराययोः पञ्चप्रकृत्यात्मके पतद्ग्रहे पञ्चप्रकृत्यात्मकं संक्रमस्थानं संक्रामति ॥ ६२ ॥

वेदनीयस्य केवलज्ञानदर्शनयथाख्यातचारित्रेषु संक्रमस्थानं नास्ति साम्परायिकबन्धाभावेन प्रतिग्रहाभावात् ॥ ३ ॥ सूक्ष्मसम्पराये सातवेदनीयरूपे प्रतिग्रहेऽसातरूपमेकमेव संक्रमस्थानं संक्रामति, न सातरूपम्, असातस्य बन्धाभावेन प्रतिग्रहाभावादिति ॥ १ ॥ मनुजगतिपञ्चाक्षजातित्रसकाययोगत्रिकवेदत्रिककषायचतुष्ककेवलज्ञानवर्जज्ञानचतुष्कसामायिकच्छेदोपस्थापनीयपरिहारविशुद्धिककेवलदर्शनवर्जदर्शनत्रिकशुभलेश्यात्रिकभव्यक्षयोपशमोपशमक्षायिकसंज्ञ्याहारकरूपासु मार्गणासु प्रमत्तं यावत् सातासातरूपे द्वे अपि संक्रमस्थाने संक्रामतः, द्वयोरपि परावर्तमानत्वेन पतद्ग्रहस्य लभ्यमानत्वात्। अप्रमत्तादारभ्य सूक्ष्मसम्परायं यावत् सातस्यैव बध्यमानत्वेन तत्रासातरूपमेकमेव संक्रमस्थानं भवति ॥३२॥ मनुजगतिवर्जगतित्रिकाद्यजातिचतुष्काद्यकायपञ्चकाज्ञानत्रिकाविरतदेशविरताशुभलेश्यात्रिकाभव्यमिथ्यात्वसास्वादनमिश्रासंज्ञ्यनाहारकरूपासु स्वकीयेषु सर्वेषु गुणस्थानेषु सातासातरूपे द्वे संक्रमस्थाने परावर्तमानत्वेन बध्यमाने प्रतिग्रहे परावर्तमानत्वेन संक्रामतः ॥ २६ ॥ केवलज्ञानवर्जज्ञानचतुष्कावधिदर्शनदेशविरतसामायिकच्छेदोपस्थापनीयपरिहारविशुद्धिकसूक्ष्मसम्परायौपशमिकक्षायोपशमिकक्षायिकमिश्ररूपासु मार्गणासु निजनिजगुणस्थानेषु नीचगोत्ररूपमेकमेव बध्यमाने उच्चैर्गोत्रे संक्रामति, नोच्चैर्गोत्रं, नीचगोत्रस्य बन्धाभावेन प्रतिग्रहाभावादिति ॥ १४ ॥ केवलद्विकयथाख्यातयोर्नास्ति संक्रमसंवेधः, बन्धाभावेन पतद्ग्रहाभावात् ॥ ३ ॥

तेजोवायुकायिकयोस्तूच्चैर्गोत्रमेव बध्यमाने नीचगोत्रे संक्रामति न नीचगोत्रम्, उच्चैर्गोत्रस्य बन्धाभावेन प्रतिग्रहाभावात्। तदपि यावदुच्चैर्गोत्रं नोद्वलयति तावत् संक्रामति परतः सत्ताभावात् न संक्रमः ॥२॥ गतिचतुष्केन्द्रियपञ्चकगतित्रसवर्जकायचतुष्कयोगत्रिकवेदत्रिककषायचतुष्काज्ञानत्रिकाविरतचक्षुरचक्षुर्दर्शनलेश्याषट्कभव्याभव्यमिथ्यात्वसास्वादनसंज्ञ्यसंज्ञ्याहारकानाहारकरूपासु मार्गणासूच्चैर्गोत्रं नीचैर्गोत्रं वा बन्धस्य यावत् परावर्तमानत्वेन बध्यमाने निचैर्गोत्रे उच्चैर्गोत्रे वा नीचैर्गोत्रमुच्चैर्गोत्रं वा संक्रामति। मिश्रादौ नीचगोत्रमेव बध्यमाने उच्चैर्गोत्रे संक्रामति, नोच्चैर्गोत्रं, नीचगोत्रस्य बन्धाभावेन प्रतिग्रहाभावादिति ॥४३॥

मनुजगतिवर्जगतित्रिकाद्यजातिचतुष्काद्यकायपञ्चकाज्ञानत्रिकाविरतदेशविरतपरिहारविशुद्धिकशुक्लवर्जलेश्यापञ्चकाभव्यमिथ्यात्वसास्वादनमिश्रक्षायोपशमिकौपशमिकासंज्ञ्याहारकरूपासु मार्गणासु नवप्रकृत्यात्मके षट्प्रकृत्यात्मके चतुष्प्रकृत्यात्मके च प्रतिग्रहे नवप्रकृत्यात्मकं संक्रमस्थानं संक्रामति। एतदुक्तं भवति–यासु मार्गणासु मिथ्यादृष्टित्वं सास्वादनसम्यग्दृष्टित्वं च विद्यते तासु नवप्रकृत्यात्मके, यासु मिश्रादारभ्यापूर्वकरणप्रथमभागा

न्तानि गुणस्थानानि सन्ति तासु पट्प्रकृत्यात्मके, यास्त्वपूर्वकरणद्वितीयभागादारभ्य सूक्ष्मसम्परायपर्यन्तानि गुणस्थानानि सन्ति तासु चतुष्प्रकृत्यात्मके नवक संक्रामति ॥२१॥ मनुजगतिपञ्चाक्षजातित्रसकाययोगत्रिकवेदत्रिककषायचतुष्ककेवलज्ञानवर्जज्ञानचतुष्कसामायिकच्छेदोपस्थापनीयसूक्ष्मसम्परायकेवलदर्शनवर्जदर्शनत्रिकशुक्ललेश्याभव्यक्षायिकसम्यक्त्वसञ्ज्याहारकरूपासु मार्गणासु द्वे संक्रमस्थाने संक्रामत., तद्यथा-नवप्रकृत्यात्मक पट्प्रकृत्यात्मकं चेति। तत्र नवप्रकृत्यात्मकं पूर्ववत् परिभावनीयम्। अनिवृत्तिवादरे स्त्यानर्द्धित्रिकक्षयानन्तर सूक्ष्मसम्पराये च पट्प्रकृत्यात्मकं चतुष्कप्रतिग्रहे संक्रामति, परतः दर्शनावरणस्य न संक्रम, बन्धाभावेन प्रतिग्रहाभावादिति ॥ २८ ॥ केवलज्ञानदर्शनयथाख्यातचारित्रेषु न संक्रमप्रतिग्रहाविति ॥ ३ ॥ उक्तो मार्गणासु दर्शनावरणस्य संक्रमप्रतिग्रहस्थानसंवेधः ॥

॥ मार्गणासु संक्रमसंवेधयन्त्राणि ॥

| ॥ ज्ञाना० विघ्नयो ॥ | |
|---|---|
| केवल२-यथा०षु | ०व धाभावेनापतद्ग्रहत्वात् न संक्रमः |
| शेष ५९ षु १ | ५ कस्य ५ षु |

| ॥ वेदनीयस्य संक्रमसंवेध ॥ | | |
|---|---|---|
| केवल २-यथा०षु | ०प धाभावेनापतद्ग्रहत्वाद् न संक्रम | |
| सू० संपराये १ | असातस्य साते | |
| ३ अमनुज-४ कुजाति-५ काय-३ अज्ञान-अविरत-देशवि०-३ कुलेश्या अभव्य-मि० सास्वा०-मिश्र-असंज्ञि-अनाहारेषु [२६ षु] | २-असातस्य साते सातस्य असाते च | |
| शेष ३९ षु | २ परावर्तमानेन प्रमत्त यावत् | |
| | १ असातस्य साते ७ त १० म यावत् | |

| ॥ गोत्रस्य संक्रमसंवेध ॥ | | |
|---|---|---|
| ४ज्ञान, अवधिद०, देशवि०, सामा०, छेदो०, परिहार, सू० संप०, उप०, क्षयोप०, क्षा०, मिश्रेषु [ १७षु ] | १ नीचस्य उच्चैर्गोत्रे | |
| तेजो-वाय्वो | १ उच्चस्य नीचगोत्रे | |
| केवल २, यथा०यो | ० | |
| शेष ४३ षु | २-नीचगुच्चे उच्च नीचे च | सास्वादन यावत् |
| | १-नीचगुच्चे मिथ्यादिषु [-३ तः १०) | |

| ॥ दर्शनावरणस्य संक्रमसंवेध ॥ | | | |
|---|---|---|---|
| ३ अमनुज, ४ कुजाति, ५काय, ३ अज्ञान, अवि०, देशवि०, परिहार, ५प्रथमलेश्या, अभव्य, ५ क्षायिकवर्जंस०, १ असंज्ञि, अनाहारेषु [ ३१ षु ] | ३ | स० पत० | गुण० |
| | | ९—९ | १-२ |
| | | ९—६ | ३ त ६ |
| | | ९—४ | ६ त १० |
| | | यथासंभवम् | |
| केवल २—यथा० षु | ० | | |
| शेष २८ षु २ | ९-९ | १-२ गुण० | |
| | ६-४ | ९-१० [क्षपकाणाम्] | |
| | शेषाणां शेष षु पूर्ववत् | | |

अथ मोहनीयस्य मार्गणासु संक्रमप्रतिग्रहस्थानसंवेध उच्यते-तत्र नरकदेवगत्योः पञ्च संक्रमस्थानानि भवन्ति, तद्यथा-सप्तविंशतिः, पड्विंशतिः, पञ्चविंशतिः, त्रयोविंशति, एकविंशतिरिति। प्रतिग्रहस्थानानि चत्वारि भवन्ति, तद्यथा-द्वाविंशतिः, एकविंशति, सप्तदश, एकोनविंशतिरिति। तत्र मिथ्यादृष्टौ अष्टाविंशतिसत्ताकस्य द्वाविंशतिप्रतिग्रहे मिथ्यात्ववर्जाः सप्तविंशति प्रकृतय. संक्रामन्ति। सम्यक्त्वे उद्वलिते तस्मिन्नेव पड्विंशतिः प्रकृतयः

सङ्क्रामन्ति,यद्वा विसयोजितानन्तानुबन्धिन तस्मिन्नेव प्रतिग्रहे त्रयोविंशति' प्रकृतय' सङ्क्रामन्ति । मिश्रे उद्वलिते अनादिमिथ्यादृष्टेर्वा पञ्चविंशति• प्रकृतय एकविंशतौ सक्रामन्ति । सास्वादने चैकविंशतिप्रतिग्रहे पञ्चविंशतिप्रकृतय• सक्रामन्ति । मिश्रे सप्तदशप्रकृत्यात्मके पञ्चविंशतिः प्रकृतय सङ्क्रामन्ति । यद्वोद्वलितानन्तानुबन्धिनस्तस्मिन्नेव प्रतिग्रहे एकविंशति प्रकृतय सक्रामन्ति । अविरतसम्यग्दृष्टौ एकोनविंशतिप्रतिग्रहे सप्तविंशति प्रकृतय सङ्क्रामन्ति । औपशमिकसम्यग्दृष्टेरावलिकाया अभ्यन्तरे वर्तमानस्य मिश्रस्य सक्रमावलिकाभ्यन्तरवर्तित्वेन सम्यक्त्वस्य च प्रतिग्रहत्वेन तद्व्यतिरिक्ता षड्विंशति प्रकृतय एकोनविंशतिप्रतिग्रहे सङ्क्रामन्ति । क्षायिकसम्यग्दृष्टे सप्तदशप्रतिग्रहे एकविंशति प्रकृतय सङ्क्रामन्ति । विसयोजितानन्तानुबन्धिनस्तु एकोनविंशतिप्रतिग्रहे त्रयोविंशति' प्रकृतय सङ्क्रामन्तीति ॥ २ ॥ तिर्यग्गतावपि चतुर्षु गुणस्थानेष्वेवमेव वाच्यम् । देशविरतेऽप्यविरतसम्यग्दृष्टिवत् सर्वं वाच्यम्, नवरमेकविंशतिसक्रमस्थानं नास्ति, क्षायिकसम्यग्दृष्टेरभावात् । प्रतिग्रहस्थान तु पञ्चदशप्रकृत्यात्मकमेकमेव ॥ १ ॥ मनुजगतिपञ्चाक्षजातित्रसकाययोगत्रिकचक्षुरचक्षुर्दर्शनशुक्ललेश्याभव्यसंज्ञ्याहारकरूपासु मार्गणासु सर्वाणि सक्रमस्थानानि प्रतिग्रहस्थानानि भवन्ति, प्रागुक्तगुणस्थानानुसारेण भावनीयानि च ॥ १२ ॥ जातिचतुष्ककायपञ्चकासंज्ञिषु त्रीणि सक्रमस्थानानि भवन्ति । तत्र मिथ्यादृष्टौ द्वाविंशतिप्रतिग्रहे सप्तविंशति , सम्यक्त्वे उद्वलिते च तत्रैव षड्विंशतिप्रकृतिस्थान सङ्क्रामति । मिश्रे उद्वलिते अनादिमिथ्यादृष्टेर्वा सास्वादनसम्यग्दृष्टौ च तेजोवायुवर्जशेषस्य चैकविंशति प्रतिग्रहे पञ्चविंशति प्रकृतय सङ्क्रामन्ति ॥ १० ॥ अज्ञानत्रिके मिथ्यादृष्टौ द्वाविंशतिप्रतिग्रहे सप्तविंशति , सम्यक्त्वे उद्वलिते षड्विंशति , उद्वलितानन्तानुबन्धिनश्च त्रयोविंशति प्रकृतय सङ्क्रामन्ति । मिश्रे उद्वलिते अनादिमिथ्यादृष्टेर्वा, सास्वादनसम्यग्दृष्टेश्चैकविंशतिप्रतिग्रहे, मिश्रदृष्टौ सप्तदशप्रतिग्रहे पञ्चविंशति प्रकृतय सङ्क्रामन्ति । उद्वलितानन्तानुबन्धिनश्च मिश्रदृष्टावेकविंशति प्रकृतय सङ्क्रामन्ति ॥ ३ ॥ मतिज्ञानादित्रिके पञ्चविंशतिप्रकृत्यात्मक सक्रमस्थान द्वाविंशत्येकविंशतिप्रकृतिरूपे च द्वे प्रतिग्रहस्थाने न भवन्ति । सर्वेषस्त्वविरतसम्यग्दृष्ट्यादिगुणस्थानानुसारेण वाच्य• ॥ ३ ॥ अवधिदर्शनेऽप्येव मिथ्यात्वादिगुणस्थानत्रिकविवक्षणे तु सर्वाणि सक्रमस्थानानि सर्वाणि प्रतिग्रहस्थानानि च भवन्ति ॥ १ ॥

सामायिकचारित्रे पञ्चविंशतिप्रकृतिरूप सक्रमस्थान वर्जयित्वा शेषाणि सक्रमस्थानानि, नवसप्तषट्पञ्चचतुस्त्रिद्व्येकप्रकृत्यात्मकानि अष्टौ प्रतिग्रहस्थानानि च भवन्ति । सर्वेषभावना गुणस्थानानुसारेण कर्तव्येति ॥ १ ॥ छेदोपस्थापनीयचारित्रे मन पर्यवज्ञाने च पञ्चविंशति षड्विंशतिरूपे द्वे सक्रमस्थाने न स्त , यत पञ्चविंशतिसक्रमस्थानमाद्यगुणस्थानत्रिके एव सङ्क्रामति, नान्यत्र । षड्विंशतिप्रकृतिरूप सक्रमस्थान तु यद्यपि प्रमत्ताप्रमत्तयोर्विद्यते तथाप्यत्र न सभवति, श्रेणिगतौपशमिकसम्यक्त्वसभवेऽपि प्राथमिकौपशमिकसम्यक्त्वस्याभावेना-

वलिकाभ्यन्तरे वर्त्तमानस्यापि मिश्रस्य सक्रमसंभवेन सप्तविंशतिसंक्रमस्थानस्यैव प्राप्यमाणत्वात् । शेषा संक्रमप्रतिग्रहस्थानविषया भावना संवेधश्च सर्वं पूर्ववत् ज्ञेयम् ॥ २ ॥ केवलज्ञानदर्शनयोर्नास्ति संक्रमप्रतिग्रहयोः संवेध, क्षीणमोहत्वादिति ॥ २ ॥ सूक्ष्मसम्परायथाख्यातयो सम्यक्त्वमिश्ररूपे द्विरूपप्रतिग्रहे मिथ्यात्वमिश्ररूपं प्रकृतिद्विकं संक्रामति ॥ २ ॥ देशविरते त्रयोदशचतुर्दशपञ्चदशरूपप्रतिग्रहत्रिके सप्तविंशतिषड्विंशतित्रयोविंशतिद्वाविंशत्येकविंशतिरूपाणि पञ्च संक्रमस्थानानि यथायोग संक्रामन्ति ॥ १ ॥ परिहारविशुद्धौ सप्तविंशतित्रयोविंशतिद्वाविंशत्येकविंशतिरूपाणि चत्वारि संक्रमस्थानानि एकादशदशनवकरूपे प्रतिग्रहे यथायोग प्रमत्ताप्रमत्तयो संक्रामन्ति ॥ १ ॥ अविरतमार्गणाया मिथ्यादृष्टौ द्वाविंशतिप्रतिग्रहे सप्तविंशति, षड्विंशतिश्च संक्रामति। एकविंशतौ पञ्चविंशतिप्रकृतिस्थान संक्रामति । द्वाविंशतौ च त्रयोविंशतिः संक्रामति । सास्वादने एकविंशतौ पञ्चविंशतिप्रकृतिस्थान संक्रामति । मिश्रगुणस्थाने सप्तदशप्रकृत्यात्मके पतद्ग्रहे पञ्चविंशतिरेकविंशतिश्च संक्रामति । अविरतसम्यग्दृष्टावेकोनविंशतौ सप्तविंशतिषड्विंशतित्रयोविंशतिरूपाणि त्रीणि संक्रमस्थानानि संक्रामन्ति । मिथ्यात्वे क्षीणेऽष्टादशप्रकृतिरूपे प्रतिग्रहे द्वाविंशतिप्रकृतिस्थानं संक्रामति । मिश्रे क्षीणे क्षायिकसम्यग्दृष्टेश्च सप्तदशप्रकृत्यात्मके प्रतिग्रहे एकविंशतिप्रकृतिस्थान संक्रामति ॥ १ ॥ शुक्लवर्जलेश्यापञ्चके द्वाविंशत्येकविंशत्येकोनविंशतिसप्तदशपञ्चदशत्रयोदशैकादशनवकरूपेषु प्रतिग्रहेषु मिथ्यात्वादिगुणस्थानेषु यथासंभवं सप्तविंशतिषड्विंशतिपञ्चविंशतित्रयोविंशत्येकविंशतिरूपाणि पञ्च संक्रमस्थानानि संक्रामन्ति ॥ ५ ॥ अभव्ये एकविंशतिप्रकृत्यात्मके प्रतिग्रहे पञ्चविंशतिप्रकृतिस्थानं संक्रामति ॥ १ ॥ मिथ्यात्वसास्वादनमिश्राख्यासु मार्गणासु स्वस्वगुणस्थानवत् संक्रमप्रतिग्रहस्थानानां संवेधो वाच्य ॥ ३ ॥ क्षायोपशमिकसम्यक्त्वे अविरतसम्यग्दृष्ट्यादिषु चतुर्षु गुणस्थानेष्वेकोनविंशत्यष्टादशसप्तदशपञ्चदशचतुर्दशत्रयोदशैकादशदशनवकरूपेषु प्रतिग्रहेषु यथासंभव सप्तविंशतित्रयोविंशतिद्वाविंशत्येकविंशतिरूपाणि चत्वारि संक्रमस्थानानि संक्रामन्ति ॥ १ ॥ औपशमिकसम्यग्दृष्टावेकोनविंशतिपञ्चदशैकादशसप्तषट्पञ्चचतुस्त्रिद्विरूपेषु नवसु प्रतिग्रहेषु अविरतगुणस्थानादारभ्योपशान्तमोह यावत् यथासंभव सप्तविंशतिषड्विंशतित्रयोविंशतिद्वाविंशत्येकविंशतिविंशतिचतुर्दशत्रयोदशैकादशदशाष्टसप्तपञ्चचतुर्द्विरूपाणि पञ्चदश संक्रमस्थानानि संक्रामन्ति ॥ १ ॥ क्षायिकसम्यग्दृष्टाविरतादारभ्यैकादशगुणस्थानानि भवन्ति । तत्र प्रतिग्रहस्थानानि सप्तदशत्रयोदशनवपञ्चचतुस्त्रिद्व्येकप्रकृत्यात्मकान्यष्टौ भवन्ति । संक्रमस्थानानि च षोडश भवन्ति, तानि चामूनि एकविंशतिर्विंशत्येकोनविंशत्यष्टादशत्रयोदशद्वादशैकादशदशनवाष्टषट्पञ्चचतुस्त्रिद्व्येकप्रकृत्यात्मकानीति । तत्राविरतसम्यग्दृष्टौ सप्तदशप्रकृतिरूपे प्रतिग्रहे, देशविरते त्रयोदशप्रकृतिरूपे, प्रमत्ताप्रमत्तापूर्वकरणेषु नवप्रकृतिरूपे प्रतिग्रहे एकविंशतिप्रकृतिस्थान संक्रामति । शेषाणि पञ्चदश संक्रमस्थानान्यनिवृत्तिकरणे पञ्चचतुस्त्रिद्व्येकप्रकृत्यात्मकेषु पञ्चप्रतिग्रहेषु

यथासंभवं सक्रामन्ति ॥१॥ अनाहारकमार्गणाया मिथ्यादृष्टौ द्वाविंशतिप्रकृतिरूपे प्रतिग्रहे सप्तविंशतिपड्विंशतित्रयोविंशतिरूपाणि त्रीणि सक्रमस्थानानि सक्रामन्ति। सास्वादने एकविंशतिप्रकृतिरूपे प्रतिग्रहे पञ्चविंशति सक्रामति । अविरतसम्यग्दृष्टौ एकोनविंशतिप्रकृतिरूपे प्रतिग्रहे सप्तविंशतित्रयोविंशतिरूपे द्वे सक्रमस्थाने सक्रामतः । क्षायिकसम्यग्दृष्टे सप्तदशप्रकृत्यात्मके एकविंशतिप्रकृतिस्थान सक्रामति । त्रयोदशचतुर्दशगुणस्थानयोर्मोहनीयस्य सत्ताबन्धयोरभावान्नास्ति सवेध. ॥ १ ॥ नपुसकवेदे द्वाविंशत्येकविंशत्येकोनविंशत्यष्टादशसप्तदशपञ्चदशचतुर्दशत्रयोदशैकादशदशनवसप्तपञ्चप्रकृत्यात्मकेषु त्रयोदशसु प्रतिग्रहेषु यथासंभव सप्तविंशतिपड्विंशतिपञ्चविंशतित्रयोविंशतिद्वाविंशत्येकविंशतिविंशतित्रयोदशद्वादशरूपाणि नव सक्रमस्थानानि सक्रामन्ति । तत्र मिथ्यादृष्टौ द्वाविंशतिप्रतिग्रहे सप्तविंशतिपड्विंशतित्रयोविंशतिरूपाणि त्रीणि सक्रमस्थानानि सक्रामन्ति । मिथ्यादृष्टौ सास्वादने च एकविंशतिप्रतिग्रहे पञ्चविंशतिप्रकृतिस्थान सक्रामति । मिश्रगुणस्थाने सप्तदशप्रकृतिरूपे प्रतिग्रहे पञ्चविंशत्येकविंशतिरूपे द्वे सक्रमस्थाने सक्रामत । अविरतसम्यग्दृष्टावेकोनविंशतिप्रकृतिरूपे प्रतिग्रहे सप्तविंशतिपड्विंशतित्रयोविंशतिरूपाणि त्रीणि सक्रमस्थानानि सक्रामन्ति, अष्टादशप्रकृतिरूपे प्रतिग्रहे द्वाविंशति सक्रामति, सप्तदशप्रकृतिरूपे प्रतिग्रहे क्षायिकसम्यग्दृष्टेरेकविंशति सक्रामति । देशविरतौ पञ्चदशप्रकृतिरूपे प्रतिग्रहे सप्तविंशतिपड्विंशतित्रयोविंशतिरूपाणि त्रीणि सक्रामन्ति, चतुर्दशप्रकृतिरूपे प्रतिग्रहे द्वाविंशतिप्रकृतिस्थान सक्रामति, त्रयोदशप्रकृतिरूपे प्रतिग्रहे एकविंशतिप्रकृतिस्थान सक्रामति । प्रमत्ताप्रमत्तयोरेकादशप्रकृतिरूपे प्रतिग्रहे सप्तविंशतिपड्विंशतित्रयोविंशतिरूपाणि त्रीणि सक्रमस्थानानि सक्रामन्ति, दशप्रकृतिरूपे प्रतिग्रहे द्वाविंशतिप्रकृतिस्थानं सक्रामति, नवप्रकृतिरूपे एकविंशतिप्रकृतिस्थान सक्रामति । अपूर्वकरणे एकादशप्रकृतिरूपे पतद्ग्रहे त्रयोविंशतिप्रकृतिस्थान सक्रामति, नवकप्रतिग्रहे एकविंशतिप्रकृतिस्थान सक्रामति । अनिवृत्तिकरणे सप्तकप्रतिग्रहे त्रयोविंशतिद्वाविंशतिरूपे द्वे सक्रामत , पञ्चप्रकृत्यात्मके प्रतिग्रहे क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यामेकविंशतिविंशतिरूपे द्वे सक्रामतः, क्षपकश्रेण्या च त्रयोदशद्वादशरूपे द्वे सक्रमस्थाने तस्मिन्नेव पञ्चकप्रतिग्रहे सक्रामतः ॥ १ ॥ वर्षधरात् स्त्रीवेदे यो विशेष स प्रतिपाद्यते–उपशमश्रेण्यामौपशमिकसम्यग्दृष्टे नपुसकवेदे उपशान्ते एकविंशति प्रकृतय सप्तकप्रतिग्रहे सक्रामन्ति, क्षायिकसम्यग्दृष्टेरुपशमश्रेण्या पञ्चकप्रतिग्रहे नपुसकवेदे उपशान्ते एकोनविंशतिप्रकृतिस्थान सक्रामति, क्षपकश्रेण्या नपुसकवेदे क्षीणे एकादश प्रकृतय पञ्चकप्रतिग्रहे सक्रामन्ति ॥ १ ॥ स्त्रीवेदात्पुरुषवेदे यो विशेष स प्रतिपाद्यते–औपशमिकसम्यग्दृष्टेरुपशमश्रेण्या स्त्रीवेदे उपशान्ते विंशतिप्रकृतिस्थान सप्तकप्रतिग्रहे सक्रामति। पुरुषवेदापनीते पट्कप्रतिग्रहे तदेव विंशतिप्रकृतिस्थान सक्रामति । क्षायिकसम्यग्दृष्टेरुपशमश्रेण्या स्त्रीवेदे उपशान्तेऽष्टादश प्रकृतय पञ्चकप्रतिग्रहे सक्रामन्ति । पुरुषवेदे चापनीते चतुष्कप्रतिग्रहेऽपि ता एवाष्टादश सक्रामन्ति । क्षपकश्रेण्या

स्त्रीवेदे क्षपिते पञ्चकप्रतिग्रहे दश प्रकृतयः सक्रामन्ति । पुरुषवेदे चापनीते चतु ग्रहे ता एव दश प्रकृतय सक्रामन्तीति ॥ १ ॥ पुरुषवेदात्कषायेष्वयं विशेषः–सज्वलनक्रोधे औपशमिकसम्यग्दृष्टेरुपशमश्रेण्या पुवेदस्य बन्धोदयव्यवच्छेदानन्तर समयोनावलिकाद्विकं यावत् सज्वलनचतुष्कसम्यक्त्वमिश्ररूपे षट्कप्रतिग्रहे चतुर्दश प्रकृतयः सक्रामन्ति । तत पुरुषवेदे उपशान्ते त्रयोदश प्रकृतयः षट्कप्रतिग्रहे सक्रामन्ति । सज्वलनक्रोधे त्वपनीते पञ्चप्रतिग्रहे त्रयोदश सक्रामन्ति । क्षायिकसम्यग्दृष्टेरुपशमश्रेण्या नोकषायषट्के उपशान्ते शेषा द्वादश प्रकृतयः समयोनावलिकाद्विकं यावच्चतुष्के प्रतिग्रहे सक्रामन्ति। पुवेदे उपशान्ते चतुष्कप्रतिग्रहे एकादश प्रकृतयः सक्रामन्ति । सज्वलनक्रोधे चापनीते त्रिकप्रतिग्रहे ता एव एकादश सक्रामन्ति । क्षपकश्रेण्या हास्यादिषट्के क्षपिते समयोनावलिकाद्विकं यावत् सज्वलनचतुष्के चतसृणा प्रकृतीना सक्रमो भवति । ततः पुरुषवेदक्षयानन्तर सज्वलनक्रोधे चापनीते त्रिकप्रतिग्रहे त्रिकं सक्रामति ॥१॥ माने पुनः सज्वलनक्रोधादय विशेषः–औपशमिकसम्यग्दृष्टेरुपशमश्रेण्या वर्तमानस्य अप्रत्याख्यानप्रत्याख्यानावरणक्रोधद्विके उपशान्ते तस्मिन्नेव पञ्चकप्रतिग्रहे ता एव एकादश सक्रामन्ति। सज्वलनक्रोधे उपशान्ते पञ्चकप्रतिग्रहे दश प्रकृतयः सक्रामन्ति। पञ्चकपतद्ग्रहात् सज्वलनमाने चापनीते चतुष्कप्रतिग्रहेऽपि दश प्रकृतयः सक्रामन्ति । क्षायिकसम्यग्दृष्टेरुपशमश्रेण्या मध्यक्रोधद्विके उपशान्ते मानमायालोभरूपे त्रिकप्रतिग्रहे नव प्रकृतयः सक्रमन्ति । तत सज्वलनक्रोधे उपशान्ते त्रिकपतद्ग्रहेऽष्टौ प्रकृतयः सक्रामन्ति । तत सज्वलनमाने चापनीते मायालोभरूपे प्रतिग्रहेऽष्टौ प्रकृतय सक्रामन्ति । क्षपकश्रेण्या सज्वलनक्रोधस्य क्षयसमये सज्वलनमानस्य पतद्ग्रहता न भवति, ततो मायालोभरूपे मानमायाद्विक सक्रामति ॥ १ ॥ मानाद् मायाया यो विशेष स प्रदर्श्यते–उपशमश्रेण्यामौपशमिकसम्यग्दृष्टे मध्यममानद्विके उपशान्ते चतुष्कप्रतिग्रहेऽष्टौ सक्रामन्ति । ततः सज्वलनमाने उपशान्ते चतुष्कप्रतिग्रहे सप्त प्रकृतयः सक्रामन्ति। ततः सज्वलनमायाया पतद्ग्रहता नश्यतीति तदपनीते सम्यक्त्वमिश्रलोभरूपे त्रिकप्रतिग्रहे सप्त सक्रामन्ति । उपशमश्रेण्या क्षायिकसम्यग्दृष्टेः मध्यममानद्विके उपशान्ते षट् प्रकृतयोः मायालोभरूपे द्विकप्रतिग्रहे सक्रामन्ति । ततः सज्वलनमाने उपशान्ते पञ्च प्रकृतय द्विकप्रतिग्रहे सक्रामन्ति। तत सज्वलनमायाऽपि पतद्ग्रहात् नश्यतीति तदपनीते लोभरूपे प्रतिग्रहे पञ्च प्रकृतयः सक्रामन्ति । क्षपकश्रेण्या सज्वलनमानक्षयकाले सज्वलनमाया पतद्ग्रहरूपा न भवति, ततो लोभे मायैव सक्रामतीति ॥ १ ॥ मायाया लोभस्य विशेष प्रदर्श्यते–उपशमश्रेण्यामौपशमिकसम्यग्दृष्टे मध्यममायाद्विके उपशान्ते त्रिकप्रतिग्रहे पञ्च प्रकृतयः सक्रामन्ति । ततः सज्वलनमायायामुपशान्ताया सम्यक्त्वमिश्रलोभरूपे त्रिकपतद्ग्रहे चतस्र प्रकृतय सक्रामन्ति । तत सज्वलनलोभस्यापतद्ग्रहभवनानन्तर मिथ्यात्वमिश्ररूप प्रकृतिद्विक सम्यक्त्वमिश्ररूपे द्विके सक्रामति । क्षायिकसम्यग्दृष्टेरुपशमश्रेण्या मध्यममायाद्विके उपशान्ते तिस्रः प्रकृतयः सज्वलनलोभे सक्रामन्ति । तत माया-

शमुपशान्ताया मध्यमलोभद्विक सञ्ज्वलनलोभे सक्रामति । सूक्ष्मसम्परायेऽपि दर्शनद्विक दर्शनद्विके सक्रामतीति ॥ १ ॥ इत्युक्तो मार्गणासु मोहनीयसक्रमसवेध' ॥ ६२ ॥

## ॥ मोहनीयस्य स० पत० स्थानसवेधयन्त्राणि ॥

| गति | स० स्था० | पत० स्था० | गुणस्थाने | सं० स्थान | पत० स्थान | स्वामि |
|---|---|---|---|---|---|---|
| नरकगतौ—देवगतौ | स०स्था०५—२७, २६, २५, २३, २१ | पत० स्था०४—२२, २१, १९, १७ | मिथ्यात्वे | २७ | २२ | २८ सत्ताक |
| | | | ,, | २६ | ,, | उद्व०सम्य० [ २७सत्ता ] |
| | | | ,, | २३ | ,, | विसयोजितस [ २४स ] |
| | | | ,, | २५ | २१ | अद्वलितमिश्रोऽनादिमि थ्यादृष्टिवा [ २६सत्ता ] |
| | | | सास्वादने | २५ | २१ | स एव [ २८ सत्ताक ] |
| | | | मिश्र | २५ | १७ | स एव |
| | | | ,, | २१ | ,, | २४ सत्ताक |
| | | | अविरते | २७ | १९ | स्वाभाविकः |
| | | | | २६ | १९ | उपशमावलिकान्तगत |
| | | | | २१ | १७ | क्षायिकसम्यग्दृष्टि |
| | | | | २३ | १९ | वियोजितसयोजनः |

| तिर्यग्गतौ | १, २, ३, ■ गुणेषु नारकवत् | ५ मे २०, २४, २३ सङ्क्रमा १५ पतद्ग्रहे | | | | |
|---|---|---|---|---|---|---|
| | | | मनुज-पचे०-त्रस-३ योग-चक्षु-अचक्षु-शुक्ल-भव्य-सज्ञि-आहा० षु [ १२ षु ] | सर्वाणि सक्रम स्थानानि स र्वाणि च पतद्ग्रहाणि-गुण स्थानोक्तवत् | | |
| | | | ४ जाति-५ काय-असज्ञिषु [ १० षु ] | मिथ्यात्वे | स० २७ | पत० २२ |
| | | | | ,, | २६ | ,, |
| | | | | ,, | २५ | २१ |
| | | | | सास्वादने | २५ | ,, |
| | | | ३ अज्ञानेषु | मिथ्यात्वे | २७ २६ २३ | २२ प० |
| | | | | ,, | २५ स० | २१ |
| | | | | सास्वा० | २५ | २१ |
| | | | | मिश्रे | २५ | १७ |
| | | | | ,, | २१ | १७ |

| मार्गणा | स्थानानि | | |
|---|---|---|---|
| ३ ज्ञानेषु अवधिद० | २२ सं० स्थानानि—२५ वर्जानि १, २, ३, ४, ५, ६, ७, ८, ९, १०, ११, १२, १३, १४, १८, १९, २०, २१, २२, २३, २६, २७ इति सक्रमस्थानानि २२ | | |
| | १८ पतद्ग्रहाणि—२२-२१ वर्जानि [ १, २, ३, ४, ५, ६, ७, ९, १०, ११, १३, १४, १५, १७, १८, १९ ] | | |
| | सवेध —अविरतादिगुणस्थानोक्तवत् | | |
| सामा० छेदो० | स० स्था० २२—२५वर्जसर्वाणि [ छेदो० वे २६ अपि न सभवेत् ] | | |
| | पत० स्था० १०—११, १०, ९, ७, ६, ५, ४, ३, २, १, | | |
| | सवेध —गुणस्थानोक्तवत् | | |
| मन पर्यवे | स० स्था० २१—२५, २६वर्जानि सर्वाणि | | |
| | पत० स्था० १०—११, १०, ९, ७, ६, ५, ४, ३, २, १, | | |
| | सवेध —स्वगुणस्थानोक्तवत् | | |
| केवल२के | ० सक्रमपतद्ग्रहाभाव [ क्षीणमोहत्वेन ] | | |
| सू०सप० यथा० | २ के २ के [ मिथ्या० मिश्ररूपद्विक सम्य० मिश्रद्विके ] | | |
| देशविरते | स०स्था०५—२७, २६, २३ २२, २१ | | पचमे गुणे |
| | पत० स्था० ३—१३ १४, १५ | | |
| परिहारे | सं० स्था०४—२७, २३, २२, २१ | | प्रमत्ताप्रमत्तयो |
| | पत० स्था०३—११, १०, ९ | | |
| अविरते | मिथ्यात्वे | स स्था०२७ २६ | पत० २२ |
| | ,, | २५ | २१ |
| | ,, | २३ | २२ |
| | सास्वा० | २५ | २१ |
| | मिश्रे | २१ | १७ |
| | ,, | २१ | १७ |
| | सम्यक्त्वे | २७-२६-२३ | १९ |
| | ,, | २२ | १८ |
| | ,, | २१ | १७ |

| | | | |
|---|---|---|---|
| ५ आद्य लेश्यासु | स० ५—२७, २६, २५, २३, २१ | | स्वेषु गुणेषु यथासंभवं |
| | पत० ११—२२, २१, १९, १८, १७, १५, १४, १३, ११, १०, ९, | | |
| अभव्ये | १—२५ स० २१ पतद्ग्रहे | | |
| मिथ्या०-सास्वा० मिश्रेषु | स्वस्वगुणस्थानवत् | | |
| क्षयोपशमे | स ४—२७, २३, २२, २१ | | ४, ५, ६, ७ गुणेषु यथा-योग्यम् |
| | पत० ९—१९, १८, १७, १५, १४, १३, ११, १०, ९ | | |
| उपशमे | स०१५—२७, २६, २३, २२, २१, २०, १४, १३, ११, १०, ८, ७, ५, ४, २ | | ४ त ११ गुणेषु |
| | पत० ९—१९, १५, ११, ७, ६, ५, ४, २ | | |
| क्षायिके | २१ स० | १७ पत० | ४ थे |
| | ,, | १३ ,, | ५ मे |
| | ,, | ९ ,, | ६-७-८ गु |
| | शेष १५ स्था० २०, १९, १८, १३, १२, ११, १०, ९, ८, ६, ५, ४, ३, २, १ | ५-४ ३ २ १ | ९ से |
| अनाहारे | स०२७, २६, २१ | पत० २२ | मिथ्यात्वे |
| | २५ | ,, २१ | सास्वादने |
| | २७-२३ | ,, १९ | अविरते |
| | २१ | १७ | ,, क्षायिकसम्य० |
| नपुंसके | स०९ २७-२६ २५ २३ २२ २१ २० १३ १२ | | |
| | पत० १३—२२-२१-१९-१८-१७-१५-१४-१३-११-१०-९-७-५ | | |
| | मिथ्यात्वे | स०२७-२६-२३ | पत० २२ |
| | ,, | २५ | २१ |

| | | | |
|---|---|---|---|
| नपुंसके | सास्वा० | २५ | २१ |
| | मिश्र | २५-२१ | १७ |
| | अविरते | २७-२६-२३ | १९ |
| | ,, | २२ | १८ |
| | ,, | २१ | १७ |
| | देशविरते | २७-२६-२३ | १५ |
| | ,, | २२ | १४ |
| | ,, | २१ | १३ |
| | ६-७ मे | २७-२६-२३ | ११ |
| | ,, | २२ | १० |
| | ,, | २१ | ९ |
| | अपूर्वे | २३ | ११ |
| | ,, | २१ | ९ |
| | अनिवृत्तौ | २३-२२ | ७ |
| | ,, | २१-२० | ५ |
| | ,, | १३-१२ | ५ |
| स्त्री- | नपुंसकवेदवत्, नवरं विशेषोऽयं— | | |
| | २१ स० | ७ पत० | उपशमोपशमक नपुंसको-पशान्ते |
| | १९ | ५ | क्षायिकोपशमक ,, |
| | ११ | ५ | क्षपक नपुंसके क्षीणे |
| पुंस | स्त्रीवेद- | वत्, | स्त्रीवेदाद्विशेषोऽयं |
| | २० | ७ | उपशमोपशमक स्त्र्युपशा० |
| | २० | ६ | ,, पुमपनीते |
| | १८ | ५ | क्षायिकोपशमक स्त्र्युपशा० |
| | १८ | ४ | ,, पुमपनीते |
| | १० | ५ | क्षपक स्त्रीक्षपिते |
| | १० | ४ | ,, पुमपनीते |

| | | | |
|---|---|---|---|
| क्रोधे [सज्वलने] | पुवेदवत्, नवर विशेषोऽय— | | |
| | १४-१३ स० | ६ पत० | उपशमोप० पुमुपशान्ते |
| | १३ | ५ | ,, क्रोधवज |
| | १२-११ | ४ | क्षायिकोप० ६ पुमुपशान्ते |
| | ११ | ३ | ,, क्रोधवज |
| | ४ | ४ | क्षपक हास्यषट्कवर्जं |
| | ३ | ३ | पुवेदवजम् |
| माने | सज्वलनक्रोधवत् नवरं विशेषोऽय— | | |
| | स ११ १० | पत०५ ५ | उपशमोपशमक मध्यको० द्वि०उ० स०क्रोधोपशान्ते |
| | १० | ४ | ,, स० मानवज |
| | ९ | ३ | क्षा मध्यक्रोधद्विकोपशान्ते |
| | ८ | ३ | क्षा०उ० स०क्रोधोपशान्ते |
| | ८ | २ | ,, स० मानवज |
| | २ | २ | ,, स० क्रोधक्षयकाले |

| | | | |
|---|---|---|---|
| मायायां | मानवत् नवर विशेषोऽय— | | |
| | ८ | ४ | उपशमोप मध्यमानद्वि उ० |
| | ७ स० | ४पत० | उपशमोप स मानोपशान्ते |
| | ७ | ३ | ,, मायावर्जे |
| | ६ | २ | क्षा०मध्यमानद्विकोपशा० |
| | ५ | २ | क्षायिकोप० स०मानोपशा |
| | ५ | १ | ,, सं० मायावर्जे |
| | १ | १ | क्षपक स० मानक्षयकाले |
| लोभे | मायावत् नवर विशेषोऽय— | | |
| | ५ | ३ | उ उ मध्य०माया०द्वि उ |
| | ४ स० | पत०३ | उपशमोप स०मायोपशान्ते |
| | २ | २ | लोभवज पतद्ग्रहे सम्य० वर्जसक्रम उप०शमकाना |
| | ३ | १ | क्षा०उ०मध्य०मा०द्वि उ |
| | २ | १ | क्षायिकोप० मायोपशान्ते |
| | २ | २ | उपशमोप सू०सपरा०च |

॥ नाम्नो मार्गणासु सक्रमपतद्ग्रहसवेधस्थानान्युच्यन्ते ॥

नरकगतौ नाम्नः मिथ्यादृष्टौ तिर्यक्प्रायोग्ये मनुजप्रायोग्ये वा एकोनत्रिंशति प्रतिग्रहे द्व्युत्तरशतपञ्चनवतिरूपे द्वे सक्रमस्थाने सक्रामत । मनुजप्रायोग्ये च षण्णवतिरपि सक्रामति। तिर्यक्प्रायोग्ये त्रिंशति प्रतिग्रहे द्व्युत्तरशतपञ्चनवतिरूपे द्वे सक्रामत । सास्वादने तस्मिन्नेवैकोनत्रिंशति त्रिंशति च प्रतिग्रहे पञ्चनवतिरूपमेक सक्रामति। मिश्रगुणस्थाने मनुजप्रायोग्ये एकोनत्रिंशति द्व्युत्तरशतपञ्चनवतिरूपे द्वे सक्रामत ।अविरतसम्यग्दृष्टौ मनुजप्रायोग्ये एकोनत्रिंशति द्व्युत्तरशतपञ्चनवतिरूपे द्वे सक्रामत । तीर्थकरयुते त्रिंशति प्रतिग्रहे षण्णवति० सक्रामति ॥ १ ॥ तिर्यग्गतौ मिथ्यादृष्टावपर्याप्तैकेन्द्रियप्रायोग्ये त्रयोविंशतौ, पर्याप्तैकेन्द्रियप्रायोग्ये अपर्याप्तविकलेन्द्रियतिर्यक्पञ्चेन्द्रियमनुजप्रायोग्ये पञ्चविंशतौ, पर्याप्तैकेन्द्रियप्रायोग्ये षड्विंशतौ, देवप्रायोग्ये नरकप्रायोग्ये वाष्टाविंशतौ, पर्याप्तविकलाक्षतिर्यक्पञ्चाक्षमनुजप्रायोग्ये एकोनत्रिंशति, पर्याप्तविकलाक्षतिर्यक्पञ्चाक्षप्रायोग्ये त्रिंशति पतद्ग्रहे च द्व्युत्तरशतपञ्चनवतित्रिनवतिचतुरशीतिद्व्यशीतिरूपाणि पञ्च सक्रमस्थानानि सक्रामन्ति । नवरमष्टाविंशतिप्रतिग्रहे वैक्रियसप्तक नरकद्विकसहित देवद्विकसहित वा बन्धावलिकाया अभ्यन्तर न सक्रामति, तेन बन्धावलिकाया ऊर्ध्वं द्व्युत्तरशतपञ्चनवतिरूपे द्वे एव सक्रामत , अभ्यन्तर तु चत्वार्यपि सक्रामन्ति, उद्वलितानुद्वलितानामुभयेषामप्यावलिकाभ्य-

न्तर्वर्तित्वात् । मनुजद्विकविहीनं त्र्यशीतिप्रकृतिरूप सक्रमस्थानमष्टाविंशतिप्रतिग्रहे न स
मति, शेषेषु सक्रामति । मनुजप्रायोग्ये पञ्चविंशतौ एकोनत्रिंशति च बन्धावलिकाया अ
न्तरे वर्तमानो त्र्यशीति सक्रामति, नोर्ध्वमिति । सास्वादनेऽष्टाविंशतावेकोनत्रिंश
त्रिंशति च पञ्चनवतिरूपमेकमेव सक्रामति । मिश्रादित्रिकेष्वष्टाविंशतौ त्र्युत्तरशतपञ्च
तिरूपे द्वे सक्रामतः ॥ १ ॥ देवगतौ मिथ्यादृष्टेरेकेन्द्रियप्रायोग्ये पञ्चविंशतौ षड्विंशतौ
पञ्चाक्षतिर्यक्प्रायोग्ये एकोनत्रिंशति त्रिंशति च, मनुजप्रायोग्ये एकोनत्रिंशति पतद्ग्रहे
त्र्युत्तरशतपञ्चनवतिरूपे द्वे सक्रामत. । सास्वादने एतेष्वेव प्रतिग्रहस्थानेषु पञ्चनवतिरूपं
मेव सक्रामति । मिश्रदृष्टौ मनुजप्रायोग्ये एकोनत्रिंशति पतद्ग्रहे त्र्युत्तरशतपञ्चनवतिरूपे
सक्रामत । अविरतसम्यग्दृष्टौ मनुजप्रायोग्ये एकोनत्रिंशति प्रतिग्रहे त्र्युत्तरशतपञ्चनवति
द्वे सक्रामत । जिनयुते त्रिंशति त्र्युत्तरशतपण्णवतिरूपे द्वे सक्रामतः ॥ १ ॥ मनुज
तिचक्षुर्दर्शनमनोवाग्योगेषु नरद्विकविहीनत्र्यशीतिवर्जाना सर्वेषा सक्रमस्थानाना प्रति
स्थानाना सवेध गुणस्थानेषु प्रागिव वाच्यः ॥ ६ ॥ जातिचतुष्ककायपञ्चकयो. गुणस्थ
द्विकेऽपि तिर्यग्गतिवत्सवेधो वाच्य., नवर देवनरकप्रायोग्य प्रतिग्रहस्थान तेजस्कायि
देवनरकमनुजप्रायोग्याणि प्रतिग्रहस्थानानि च न वक्तव्यानि ॥ ९ ॥ त्रसकायपञ्चाक्षजा
काययोगवेदत्रिककषायचतुष्काचक्षुर्दर्शनभव्यसङ्ग्याहारकरूपासु चतुर्दश मार्गणासु स
गुणस्थानेषु प्रागुक्तानुसारेण सक्रमस्थानप्रतिग्रहस्थानाना सवधो वाच्य. ॥ १४ ॥ मतिश्रु
ज्ञानयो गुणस्थानद्विकेऽपि तिर्यग्गतिवत् सवेधा वाच्यः, नवर नरकप्रायोग्येऽष्टाविंश
पण्णवतिरपि सक्रामति ॥ २ ॥ विभङ्गज्ञाने मिथ्यादृष्टेः नरकप्रायोग्येऽष्टाविंशतिप्रति
त्र्युत्तरशतपण्णवतिपञ्चनवतिरूपाणि त्रीणि सक्रामन्ति, शेषेषु मिथ्यादृष्टियोग्येषु प्रतिग्र
त्र्युत्तरशतपञ्चनवतिरूपे द्वे द्वे सक्रामत. । सास्वादन देवप्रायोग्याष्टाविंशतौ, पञ्चाक्षति
र्मनुजप्रायोग्यैकोनत्रिंशति तिर्यक्प्रायोग्यत्रिंशति च, मिश्रगुणस्थाने मनुजप्रायोग्यैक
त्रिंशति, देवप्रायोग्याष्टाविंशतौ च त्र्युत्तरशतपञ्चनवतिरूपे द्वे सक्रमस्थाने सक्रामतः ॥
मत्यादिज्ञानत्रिकेऽविरतसम्यग्दृष्टौ मनुजप्रायोग्य एकोनत्रिंशति देवप्रायोग्येऽष्टाविंशतौ
त्र्युत्तरशतपञ्चनवतिरूपे द्वे सक्रामतः । जिनयुते मनुजप्रायोग्ये त्रिंशति पण्णवतित्र्युत्तर
तरूपे द्वे, देवप्रायोग्ये एकोनत्रिंशति च जिननाम्नि बन्धावलिकाभ्यन्तरे त्र्युत्तरशतपञ्चनव
रूपे द्वे सक्रामत., बन्धावलिकाया ऊर्ध्वं तु त्र्युत्तरशतपण्णवतिरूपे द्वे सक्रामत. । देशवि
तप्रमत्तयो. देवप्रायोग्येऽष्टाविंशतौ त्र्युत्तरशतपञ्चनवतिरूपे द्वे सक्रामत' । देवप्रायो
जिनयुते एकोनत्रिंशति चाविरतसम्यग्दृष्टिवत् भाव्यम् । मन पर्यवज्ञाने प्रमत्ते मतिज्ञानव
अप्रमत्ते मत्यादिज्ञानचतुष्केऽपि अष्टाविंशतिप्रतिग्रहे त्र्युत्तरशतपञ्चनवतिरूपे द्वे सक्रमस्थ
सक्रामत , एकोनत्रिंशति जिननामबन्धावलिकाभ्यन्तरे वर्तमानस्य पञ्चनवति. सक्रामति
बन्धावलिकाया उपरि तु पण्णवति. सक्रामति, त्रिंशति प्रतिग्रहे आहारकसप्तकस्य बन्
धावलिकाया अभ्यन्तरे वर्तमानस्य पञ्चनवतिः सक्रामति, बन्धावलिकाया ऊर्ध्वं तु त्र्युत्तर

सङ्क्रामति, एकत्रिंशति पतद्ग्रहे जिनाहारकसप्तकयो बन्धावलिकाया अभ्यन्तरे वर्तमानयो' पञ्चनवति' सङ्क्रामति, उभयो बन्धावलिकाया ऊर्ध्वं त्र्युत्तरशत सङ्क्रामति, आहारक सप्तकस्य बन्धावलिकाभ्यन्तरे जिननाम्नस्तु बन्धावलिकाया ऊर्ध्वं षण्णवति सङ्क्रामति, आहारकसप्तकस्य बन्धावलिकोर्ध्वं जिननाम्नो बन्धावलिकाया अभ्यन्तरे वर्तमानस्य द्व्युत्तर शतं सङ्क्रामति । अपूर्वकरणगुणस्थाने षष्ठभाग यावदप्रमत्तवदिति । अपूर्वकरणसप्तमभागा दारभ्य उपशमश्रेण्या सूक्ष्मसपराय यावत् क्षपकश्रेण्या तु अनिवृत्तिकरणे नामत्रयोदशक क्षय न याति तावत् यश कीर्त्ता त्र्युत्तरशतैकोत्तरशतपञ्चनवतिचतुर्नवतिरूपाणि चत्वारि सङ्क्रमस्थानानि सङ्क्रामन्ति । त्रयोदशक्षयानन्तरमनिवृत्तिकरणे सूक्ष्मसम्पराये चैकोननव त्यष्टाशीत्येकाशीतिद्व्यशीतिरूपाणि चत्वारि सङ्क्रामन्ति । उपशान्तादौ पतद्ग्रहाभावेन सङ्क्रमाभावात् न सवेध ॥ ४ ॥ केवलज्ञानदर्शनयोर्नास्ति सङ्क्रमप्रतिग्रहस्थानाना सवेध बन्धाभावात् ॥२॥ अवधिदर्शने मतिज्ञानवत् । आद्यगुणस्थानत्रिकविवक्षणे तु मिथ्यात्वा दित्रिके विभङ्गवदिति ॥१॥ अविरतमार्गणाया मिथ्यादृष्ट्यादिचतुष्के त्रसकायवदिति ॥१॥

देशविरतेऽष्टाविंशतौ त्र्युत्तरशतपञ्चनवतिरूपे द्वे सङ्क्रामत । एकोनत्रिंशति जिननाम्नि बन्धावलिकाया अभ्यन्तरे वर्तमाने त्र्युत्तरशतपञ्चनवतिरूपे द्वे सङ्क्रामतः । बन्धावलिकाया ऊर्ध्वं त्र्युत्तरशतषण्णवतिरूपे द्वे सङ्क्रामत ॥१॥ परिहारविशुद्धौ प्रमत्तगुणस्थानेऽष्टाविंशतौ त्र्युत्तरशतपञ्चनवतिरूपे द्वे सङ्क्रामत । एकोनत्रिंशति जिननामबन्धावलिकाभ्यन्तरे ... त्र्युत्तरशतपञ्चनवतिरूपे द्वे सङ्क्रामत । बन्धावलिकाया ऊर्ध्वं तु षण्णवति- ...शतरूपे द्वे सङ्क्रामत । अप्रमत्ते अष्टाविंशतौ पञ्चनवति, एकोनत्रिंशति जिननाम्नो ...वलिकाभ्यन्तरे वर्तमानस्य पञ्चनवतिरूर्ध्वं तु षण्णवति' सङ्क्रामति, त्रिंशति आहारक सप्तकबन्धावलिकाभ्यन्तरे वर्तमानस्य पञ्चनवति प्रकृतयः सङ्क्रामन्ति । बन्धावलिकाया' ऊर्ध्वं तु त्र्युत्तरशत सङ्क्रामति । एकत्रिंशति जिनाहारकयो बन्धावलिकाभ्यन्तरे वर्तमानयो पञ्चनवति' सङ्क्रामति, उभयो बन्धावलिकाया ऊर्ध्वं त्र्युत्तरशत सङ्क्रामति । आहारकसप्तकस्य बन्धावलिकाया अभ्यन्तरे वर्तमानस्य जिननाम्नश्च बन्धावलिकाया ऊर्ध्वं वर्तमानस्य षण्णवति' सङ्क्रामति, जिननाम्नो बन्धावलिकाया अभ्यन्तरे वर्तमानस्याहारक सप्तकस्योर्ध्वं वर्तमानस्य द्व्युत्तरशत सङ्क्रामति ॥१॥ सामायिकच्छेदोपस्थापनीययो प्रमत्ता- प्रमत्तापूर्वकरणेषु परिहारविशुद्धिवत् । अपूर्वकरणसप्तमभागादारभ्य सूक्ष्मसम्पराय यावदुप- शमश्रेण्या त्र्युत्तरशतैकोत्तरशतपञ्चनवतिचतुर्नवतिरूपाणि चत्वारि यश कीर्त्ता सङ्क्रामन्ति । क्षपकश्रेण्या त्रयोदशक्षयानन्तरमेकोननवत्यष्टाशीतिद्व्यशीत्येकाशीतिरूपाणि चत्वारि तत्रैव सङ्क्रामन्ति ॥ २ ॥ यथाख्याते नास्ति सवेध, बन्धाभावात् ॥ १ ॥ सूक्ष्मसम्पराये स्वगुणस्थानवदिति ॥१॥ अशुभलेश्यात्रिके सङ्क्रमप्रतिग्रहस्थानाना सवेध स्वगुणस्थानोक्तो वाच्य ॥ ३ ॥ तेजोलेश्याया मिथ्यादृष्टौ बादरपर्याप्तैकेन्द्रियप्रायोग्ये पञ्चविंशतिषड्विंशति- रूपयोर्द्व्युत्तरशतपञ्चनवतित्रिनवतिचतुरशीतिरूपाणि चत्वारि सङ्क्रामन्ति । देवप्रायोग्यायां

विंशतावप्येतान्येव चत्वारि संक्रामन्ति, भावना प्रागुक्तानुसारेण कर्त्तव्या । पद्म
ङ्मनुजप्रायोग्ये एकोनत्रिंशति, तिर्यक्प्रायोग्ये त्रिंशति चैवमेव परिभावनीयम् । स
तेष्वेव प्रतिग्रहे द्व्युत्तरशतपञ्चनवतिरूपे द्वे संक्रामतः । मिश्रे देवप्रायोग्याष्टाविंश
जप्रायोग्यैकोनत्रिंशति च द्व्युत्तरशतपञ्चनवतिरूपे द्वे संक्रामतः । अविरतसम्यग्दृष्टे
योग्याष्टाविंशतौ मनुजप्रायोग्यैकोनत्रिंशति च द्व्युत्तरशतपञ्चनवतिरूपे द्वे स
देवप्रायोग्यैकोनत्रिंशति त्र्युत्तरशतद्व्युत्तरशतपञ्चनवतिपण्णवतिरूपाणि चत्वारि सं
तत्र जिननामबन्धावलिकाभ्यन्तरे वर्तमानस्य जिननामयुते द्वे स्थाने न संक्रामत
वलिकाया ऊर्ध्वं तु जिननामयुते द्वे संक्रामतः । देशविरते प्रमत्ते च देवप्रायो
शतौ द्व्युत्तरशतपञ्चनवतिरूपे द्वे संक्रामतः । एकोनत्रिंशति जिननामबन्धावलिका
न्तरे वर्तमानस्य द्व्युत्तरशतपञ्चनवतिरूपे द्वे संक्रामतः, ऊर्ध्वं तु त्र्युत्तरशतपण्ण
संक्रामतः । अप्रमत्तेऽप्यष्टाविंशतौ प्रमत्तवदेकोनत्रिंशति परिहारविशुद्धिवत् । त्रिंश
रकसत्कस्य बन्धावलिकाया अभ्यन्तरे वर्तमानस्य पञ्चनवतिः संक्रामति, ऊर्ध्वं
शतं संक्रामति । एकत्रिंशति त्र्युत्तरशतद्व्युत्तरशतपण्णवतिपञ्चनवतिरूपाणि चत्व
मन्ति, भावना तु प्राग्वत् कर्तव्या ॥ १ ॥ पद्मलेश्यायां मिथ्यादृष्टौ तिर्यङ्मनु
एकोनत्रिंशति, तिर्यक्प्रायोग्ये त्रिंशति, देवप्रायोग्याष्टाविंशतौ च, द्व्युत्तरशतपञ्चन
तिचतुरशीतिरूपाणि चत्वारि संक्रामन्ति । शेषगुणस्थानेषु तेजोलेश्यावदिति॥१॥ शु
मिथ्यादृष्टौ मनुजप्रायोग्ये एकोनत्रिंशति, देवप्रायोग्याष्टाविंशतौ च द्व्युत्तरशतपञ्च
नवतिचतुरशीतिरूपाणि चत्वारि संक्रामन्ति । सास्वादने मनुजप्रायोग्ये एकोनत्रिंश
दनमिश्रयोः देवप्रायोग्येऽष्टाविंशतौ द्व्युत्तरशतपञ्चनवतिरूपे द्वे संक्रामतः । अविर
तिज्ञानवदिति ॥१॥ अभव्ये एकेन्द्रियप्रायोग्ये त्रयोविंशत्यादित्रिके, विकलाक्षप्राय
क्षतिर्यक्प्रायोग्ये च पञ्चविंशत्यादित्रिके, मनुजप्रायोग्ये पञ्चविंशतौ एकोनत्रिंश
जद्विकबन्धावलिकायाः अभ्यन्तरे वर्तमानस्य पञ्चनवतित्रिनवतिचतुरशीतिद्व्य
चत्वारि ऊर्ध्वं तु द्व्यशीतिवर्जानि त्रीणि संक्रमस्थानानि संक्रामन्ति । देवनरकप्राय
शतौ पञ्चनवतित्रिनवतिचतुरशीतिरूपाणि त्रीणि संक्रामन्ति ॥ १ ॥ मिथ्यात्वसास
मार्गणासु स्वस्वगुणस्थानवत् भावना कार्या ॥३॥ क्षायोपशमिकसम्यग्दृष्टेः चतुर्षु
स्वगुणस्थानोक्तः संवेधो वाच्यः ॥१॥ औपशमिकसम्यग्दृष्टेरविरतसम्यग्दृष्टौ म
एकोनत्रिंशति द्व्युत्तरशतपञ्चनवतिरूपे द्वे संक्रामतः । मनुजप्रायोग्ये त्रिंशति च
ण्णवतिरूपे द्वे संक्रामतः । अविरतादिषु त्रिषु देवप्रायोग्येऽष्टाविंशतौ द्व्युत्तर
तिरूपे द्वे संक्रामतः । जिननामयुते एकोनत्रिंशति अविरतादिषु अपूर्वकरण
न्तेषु जिननामबन्धावलिकाया अभ्यन्तरे वर्तमानस्य पञ्चनवतिरूर्ध्वं तु पण्णवतिः
आहारकसत्कर्मणा त्वविरतादिषु प्रमत्तपर्यन्तेषु जिननामबन्धावलिकाया अभ्यन्
तमूर्ध्वं तु त्र्युत्तरशतं संक्रामति । अप्रमत्तादपूर्वकरणषष्ठभागं यावत् त्रिंशति

सकबन्धावलिकाया। अभ्यन्तरे वर्तमानस्य पञ्चनवतिरूर्ध्वं तु द्व्युत्तरशतं सक्रामति । एकविंशति उभयो बन्धावलिकाया. अभ्यन्तरे वर्तमानस्य पञ्चनवतिरूर्ध्वं तु त्र्युत्तरशत सक्रामति । जिननामबन्धावलिकाया. अभ्यन्तरे द्व्युत्तरशतमाहारकसप्तकबन्धावलिकाया अभ्यन्तरे पण्णवति' सक्रामति । अपूर्वकरणसप्तमभागादारभ्य सूक्ष्मसम्पराय यावत् यश कीर्तौ द्व्युत्तरशतैकोत्तरशतपञ्चनवतिचतुर्नवतिरूपाणि चत्वारि सक्रामन्ति ॥ १ ॥ क्षायिकसम्यग्दृष्टावप्यौपशमिकसम्यग्दृष्टिवत्, नवर क्षपकश्रेण्यामनिवृत्तिकरणे नामत्रयोदशक्षयानन्तर सूक्ष्मसम्पराये च यशःकीर्तौ एकोननवत्यष्टाशीतिव्यशीत्येकाशीतिरूपाणि चत्वारि सक्रामन्ति ॥१॥ असञ्ज्ञिनि एकेन्द्रियप्रायोग्ये त्रयोविंशत्यादिषु त्रिषु, विकलाक्षपञ्चाक्षतिर्यक्प्रायोग्येषु पञ्चविंशत्यादिषु त्रिषु, मनुजप्रायोग्यपञ्चविंशतौ एकोनत्रिंशति च, द्व्युत्तरशतपञ्चनवतित्रिनवतिचतुरशीतिव्यशीतिरूपाणि पञ्च मनुजद्विकस्य बन्धावलिकाया ऊर्ध्वं तु व्यशीतिवर्जानि चत्वारि मिथ्यादृष्टौ सक्रामन्ति, देवनरकगतिप्रायोग्येऽष्टाविंशतौ द्व्युत्तरशत पञ्चनवतिश्च सक्रामति । सास्वादने पञ्चाक्षतिर्यङ्मनुजप्रायोग्ये एकोनत्रिंशति तिर्यक्प्रायोग्ये त्रिंशति देवप्रायोग्येऽष्टाविंशतौ च पञ्चनवतिरूपमेकमेव सक्रामति॥१॥

अनाहारकमार्गणाया मिथ्यादृष्टौ एकेन्द्रियप्रायोग्ये त्रयोविंशत्यादिषु त्रिषु, विकलाक्षपञ्चाक्षतिर्यक्प्रायोग्येषु पञ्चविंशत्यादिषु त्रिषु, मनुजप्रायोग्ये पञ्चविंशतौ च, द्व्युत्तरशतपञ्चनवतित्रिनवतिचतुरशीतिव्यशीतिरूपाणि पञ्च, मनुजद्विकबन्धावलिकाया ऊर्ध्वं तु व्यशीतिवर्जानि चत्वारि सक्रामन्ति । मनुजप्रायोग्ये एकोनत्रिंशति द्व्युत्तरशतपण्णवतिपञ्चनवतित्रिनवतिचतुरशीतिव्यशीतिरूपाणि षट् सक्रामन्ति । सास्वादने पञ्चाक्षतिर्यङ्मनुजप्रायोग्ये एकोनत्रिंशति तिर्यक्प्रायोग्ये त्रिंशति च पञ्चनवतिरूपमेकमेव सक्रामति । अविरतसम्यग्दृष्टे [illegible]प्रायोग्येऽष्टाविंशतौ मनुजप्रायोग्ये एकोनत्रिंशति च द्व्युत्तरशतपञ्चनवतिरूपे द्वे सक्रामत । मनुजप्रायोग्ये त्रिंशति त्र्युत्तरशतपण्णवतिरूपे द्वे, देवप्रायोग्ये एकोनत्रिंशति च त्र्युत्तरशतद्व्युत्तरशतपण्णवतिपञ्चनवतिरूपाणि चत्वारि सक्रामन्ति ॥ १ ॥ इत्युक्तो मार्गणासु नामकर्मण सक्रमप्रतिग्रहस्थानयो सवेध, तदुक्तौ चोक्तो मार्गणासु सक्रमप्रतिग्रहयो सवेध, एवञ्च समाप्त सविस्तर प्रकृतिसक्रम• ॥

॥ मार्गणासु नाम्न सक्रमपत० सवेध ॥

| | | | |
|---|---|---|---|
| नरक गतौ– | ओघे | स० ३— १०२,९६,९५ | पत०—२९,३० |
| | मिथ्यात्वे | १०२–९५ | २९ ३० तिर्यक्प्रा०पत० |
| | | १०२ ९५ ९६ | २९ नरप्रायोग्ये |
| | सास्वा० | ९५ | २९ नरतिर्यक्प्रायोग्ये<br>३० तिर्यक्प्रायोग्ये |
| | मिश्रे | १०२–९५ | २९ नरप्रायोग्ये |
| | अविरते | १०२ ९५ ९६ | २९–३० ,, |

| | | | |
|---|---|---|---|
| तिर्य ग्गतौ– | ओघे | सं० ५—१०२,९५,९३,८४,८२<br>पत० ६—२३,२५,२६,२८,२९,३० | |
| | मिथ्यात्वे | १०२–९५–९३–८४–८२–सक्रमस्था० | २३अ० एके०प्रा० पत० |
| | | | २५प० एके०–अप०<br>विकल०–अप० ति०<br>पचे०—अप० मनुज० |
| | | | २६ एके० प्रा० |
| | | | २८ देव–नरकप्रा० |
| | | | २९पर्या० विकल–पर्या०<br>ति०प०-पर्या० मनुजप्रा० |
| | | | ३० पर्या० वि० पर्या० म० |

| | | | |
|---|---|---|---|
| | | ८२ [मनु० २ हीनम्] | २३,२५,२६,२९,३० |
| | सास्वादने | ९५ | २८, २९, ३० |
| | मिश्रे | १०२, ९५ | २८ |
| | अविरते देशविते | ,, ,, | ,, |
| देव गतौ- | ओघे | स० ४—१०३, १०२, ९६, ९५ पत० ४—२५,२६,२९,३० | |
| | मिथ्यात्वे | स० १०२,९५ | पत० २५, २६ एके० |
| | | | २९,३० पचे० ति० |
| | | | २९ मनुज० |
| | सास्वा० | ९५ | २५, २६, २९, ३० मिथ्या० वत् |
| | मिश्रे | १०२, ९५ | २९ मनुज० |
| | अविरते | १०२, ९५ | २९ ,, |
| | | १०३, ९६ | ३० जिनयुते |
| पञ्चे० मनुष मन- वचनेषु | स—१०३-१०२-१०१-९६-९५-९४-९३-८९-८८-८४-८१ [इति ८२ वर्जं ११] | | |
| | पत०—२३-२५-२६-२८-२९-३०-३१-१ | | |
| | गुण० भावना—पूर्वोक्तवत् | | |
| ३ कुज्ञानि ५ काय | मिथ्यात्वे सास्वा० | सर्वेध तिर्यग्वत् नवर देवनरकप्रा-यो० प्रतिग्रहवर्जन, तेजोवाय्वोस्तु दे-वनरकमनुजप्रायोग्यप्रतिग्रहवर्जनम् | |
| त्रस-पचे०-काययोगवेद ४ कषाय-अचक्षुर्भव्य -संज्ञि-आहा [१४] षु | स—पूर्वोक्तवत् | | |
| मति श्रुता-ज्ञानयोः | सर्वेधः तिर्यग्वत्, नवर नरकयोग्य २८ तौ ९६ तिरपि संक्रामति सा० १०२-९५ | | |

| | | | | |
|---|---|---|---|---|
| विभङ्गे- | मिथ्यात्वे | १०२,९६,९५ | २८ नारकप्रा० | |
| | ,, | १०२-९५ | शेषप्रतिग्रहेषु | |
| | सास्वा० | १०२-९५ | २८ देवप्रा० | |
| | ,, | १०२-९५ | २९पचे० ति०-मनुज० | |
| | ,, | १०२-९५ | ३० तिर्यक्प्रा० | |
| | मिश्रे | १०२-९५ | २८ देव० | |
| | ,, | १०२-९५ | २९ मनुज० | |
| मति, श्रुत, अवधि | अविरते | १०२-९५ | २९मनुज० | |
| | ,, | ,, ,, | २८ देव० | |
| | ,, | ,, ,, | २९ देव० | जिनबन्धा वलिकान्त |
| | ,, | १०३-९६ | ३०मनुज० | ० |
| | ,, | ,, ,, | २९ देव० | जिनबन्धा वलिकोर्ध्वं |
| | देशवि० | १०२-९५ | २८ देव० | |
| | | १०२-९५ ९६-१०३ | २९ ,, अवि०स०वत् | |
| मनः प० केऽपि | प्रमत्ते | १०२-९५ | २८ देव० | |
| | | १०३-९६ १०२-९५ | २९ ,, | |
| | अप्रमत्ते | १०२-९५ | २८ देव० | |
| | | ,, ,, | २९देव० [जिनबन्धावलि०] | |
| | | ९६ | २९ देव० [ ,, कोर्ध्वं ] | |
| | | ९५ | ३०देव० [आ०बन्धावलि०] | |
| | | १०२ | ३० देव० [ ,, कोर्ध्वं ] | |
| | | ९५ | ३१ देव० [जिनाहारक०] | |
| | | १०३ | ३१ देव० [ ,, ऊर्ध्वं ] | |
| | | ९६ | ३१देव० [जिनबन्धावलिकोर्ध्वं, आहा० बन्धा०न्त ] | |
| | | १०२ | ३१देव० [आहा० बन्धा० कोर्ध्वं, जिनबन्धाव०न्तश्च] | |

| | | | | |
|---|---|---|---|---|
| | अपूर्व० १–६ | अप्रमत्तवत् | | |
| | ,, ७ मे | १०२–१०१ ९५–९४ | १ यशसि १ क्षय यावत् | |
| | ,, ,, | ८९–८८ ८२–८१ | १ यशसि ११ क्षयोर्ध्वं | |
| | सूक्ष्मस० | १०२–१०१–९५–९४–८९ ८८–८२–८१ | १ यशसि | |
| | उपशान्त क्षीण० | सङ्क्रमपतद्ग्रहाभाव | | |
| केवल २ | सङ्क्रमपतद्ग्रहाभाव | | | |
| अवधिदर्शने | मतिज्ञानवत् [ ज्ञानविवक्षायां ] | | | |
| | विभङ्गवत् अपि [ अज्ञानेऽपि विवक्षिते ] | | | |
| अविरते | १,२,३,४गुणे | प्रसवत् | | |
| देशविरते | १०२,९५स० | २८ देवयोग्ये | | |
| | १०२–९५ | २९ ,, [ जिनान्तवर्ति ] | | |
| | १०३–९६ | २९ ,, [ जिनोर्ध्वं ] * | | |
| परिहारे | प्रमत्ते | १०२–९५ | २८ ,, | |
| | | १०२–९५ | २९ ,, [ जिनाभ्यन्तरे ] | |
| | | १०३–९६ | २९ ,, [ जिनोर्ध्वं ] | |
| | अप्र० | १०२–९५ | २८ ,, | |
| | | १०२–९५ | २९ ,, [ जिनाभ्यन्तरे ] | |
| | | १०३–९६ | २९ ,, [ जिनोर्ध्व ] | |
| | | ९५ | ३० ,, [ आहा०भ्यन्तरे ] | |
| | | १०२ | ३० ,, [ आहारकोर्ध्व ] | |
| | | ९५ | ३१ ,, [जिनाहारकाभ्य०] | |
| | | १०३ | ३१ ,, [ जिनाहाकोर्ध्वं ] | |
| | | ९६ | ३१ ,, [आहारकाभ्यन्तरे, जिनोर्ध्वं च ] | |
| | | १०२ | ३१ ,,[जिनान्तराहारकोर्ध्वं] | |

* अन्त अभ्यन्तरश्चात्र बन्धावलिकाया, ऊर्ध्वं शब्देनापि बन्धावलिकोर्ध्वमिति

| | | | |
|---|---|---|---|
| सामायिकछेदोप० | ६,७,८,गुणेषु | परिहारवि० वत् | |
| | ९ गुणेषु | १०२,१०१,९५,९४ संक्रम | उपशमके |
| | | ८९ ८८ ८२ ८१ | क्षपके ११ क्षयोर्ध्वम् |
| यथाख्याते | नास्ति संवेधः | | |
| सू० सपराये | स्वगुणस्थानवत् | | |
| कृष्ण, नील, कापोतेषु | स्वस्वगुणस्थानोक्तवत् | | |

| | | | |
|---|---|---|---|
| तेजो० | मिथ्यात्वे | १०२,९५, ९३,८४ | २५–२६ बा० प० पृके० प्रायोग्ये |
| | ,, | ,, ,, | २८ देवयोग्ये |
| | ,, | ,, ,, | २९पचे०ति० मनुजप्रा |
| | ,, | ,, ,, | ३० तिर्यक्प्रायोग्ये |
| | सास्वा० | १०२–९५ | २८–२९–३० |
| | मिश्रे | १०२–९५ | २८ देव०,२९ मनुज० |
| | अविरते | १०२–९५ | २८ ,, २९ ,, |
| | ,, | १०२–९५ | २९ ,,[जिनाभ्यन्तरे] |
| | ,, | १०३–९६ | २९ ,,[जिनोर्ध्वम् ] |
| | देशवि० प्रम० | १०२–९५ | २८ ,, |
| | | १०२–९५ | २९ ,, [ जिनान्त ] |
| | | १०३–९६ | २९ ,, [ जिनोर्ध्व ] |
| | अप्रमत्ते | १०२–९५ | २८ ,, |
| | ,, | ९५ | २९ ,, [ जिनान्त ] |
| | ,, | ९६ | २९ ,, [ जिनोर्ध्वं ] |
| | ,, | ९५ | ३० ,, [आहारका०] |
| | ,, | १०२ | ३० ,,[आहारकोर्ध्व] |
| | ,, | १०३–१०२ ९६–९५ | ३१ मनःपर्यववत् |

| | | | |
|---|---|---|---|
| पद्मे | मिथ्या० | १०१, ९५, ९३, ८४ | २९ ति० मनु०योग्ये |
| | | | ३० ति० योग्ये |
| | | | २८ देवयोग्ये |
| | शेषगुणेषु | —तेजोलेश्यावत् | |
| शुक्ले | मिथ्या० | १०२, ९५, | २९ मनुजयोग्ये |
| | | | २८ देवयोग्ये |
| | सास्वा० | १०२–९५ | २९ मनुज० |
| | | | २८ देव० |
| | मिश्रे | १०२–९५ | २८ देव० |
| | अविरता | दिगुणेषु | मतिज्ञानवत् |
| अभव्ये | ९५, ९३ ८४, ८२ | २३, २५, २६ एके० योग्येषु | |
| | | २५–२९–३० विकले०–पचे० ति० | |
| | | २५–२९मनुजयो० [मनुजबन्धा०त्त] | |
| | ९५–९३–८४ | २८ देव० नरक० | |
| मिथ्या०–सास्वा०–मिश्रेषु—स्वस्वगुणस्थानवत् | | | |
| क्षयोपशमे–उपशमे च | ४, ५, ६, ७ गुणेषु स्वस्वगुणस्थानवत् | | |
| | ,, ८-६ | ,, | |
| उपशमे— | ९ स १० | १०२–९५ १०१–९४ | यशसि |

| | | | |
|---|---|---|---|
| क्षायिके | उपशमसम्य०वत् नवरं विशेषोऽयं | | |
| | ९ मे | ८९, ८८, ८२, ८१, | १ यशसि, क्षपकानाम् १३ क्षयानन्तरम् |
| | १० मे | ,, ,, ,, ,, | ,, क्षपकानाम् |
| असंज्ञिनि | मिथ्यात्वे | १०२–९५ ९३–८४ ८२ | २३ २५ २६एके०योग्ये |
| | | | २५ २९ ३०वि०प०ति |
| | | | २५–२९ मनुज० |
| | | १०२–९५ | २८ देव–नरक० |
| | सास्वा | ९५ | २९पचे० ति०–मनुज० |
| | ,, | ,, | ३० तिर्यग्० |
| | ,, | ,, | २८ देवयोग्ये |
| अनाहारे | मिथ्यात्वे | १०२, ९५ ९३,८४,८२ | २३ २५ २६ एके०यो |
| | | | २५ २९ ३० वि०–प ति |
| | | | २५ नृयोग्ये |
| | ,, | १०२ ९६ ९५ ९३ ८४ ८२ | २९ नृयोग्ये |
| | सास्वा. | ९५ | २९नृ–पचे०ति०योग्ये |
| | | | ३० तिर्यग्योग्ये |
| | अविर | १०२–९५ | २८ देवयोग्ये |
| | ,, | ,, ,, | २९ नृयोग्ये |
| | ,, | १०३–९६ | ३० नृयोग्ये |
| | ,, | १०३–१०२ ९६–९५ | २९ देवयोग्ये |

## अथ स्थितिसंक्रमाधिकार ।

साम्प्रतं स्थितिसंक्रमाभिधानावसरः, तत्र च षडर्थाधिकाराः, तद्यथा–भेदः, विशेषलक्षणं, उत्कृष्टस्थितिसंक्रमपरिमाणं, जघन्यस्थितिसंक्रमपरिमाणं, साद्यादिप्ररूपणा, स्वामित्वप्ररूपणा चेति । तत्र भेदो द्विविधः, तद्यथा–मूलप्रकृतिस्थितिसंक्रम, उत्तरप्रकृतिस्थितिसंक्रमश्च । मूलप्रकृतिस्थितिसंक्रमोऽष्टधा, तद्यथा–ज्ञानावरणीयस्य, दर्शनावरणीयस्य, वेदनीयस्य, मोहनीयस्य, आयुषः, नाम्नः, गोत्रस्य, अन्तरायस्येति । नन्वष्टानां मूलप्रकृतीनामायुषश्चोत्तरप्रकृतीनां प्राक्सर्वथा संक्रमो निषिद्ध इति चेत् ?, सत्यम्, परं तत्रान्यप्रकृतावन्यप्रकृतिनयनलक्षणस्यैव संक्रमस्य निषेधः कृतः, अत्र तूद्वर्तनापवर्तनरूपत्वेन संक्रमस्य विवक्षितत्वात् न कश्चिद् दोषः, उत्तरप्रकृतीनां तु त्रयोऽपि संक्रमाः सम्भवन्ति । तत्र उत्तरप्रकृतिस्थितिसंक्रमोऽष्टपञ्चाशदधिकशतधा, तद्यथा–मतिज्ञानावरणीयस्य, श्रुतज्ञानावरणीयस्य यावद्वीर्यान्तरायस्येत्युक्तो भेदः । अधुना विशेषलक्षणमुच्यते–तच्च त्रिविधम्, उद्वर्तनारूपं, अपवर्तनारूपं, प्रकृत्यन्तरनयनलक्षणम् । तत्रोद्वर्तनं नाम शुभाशुभाध्यवसायेन बध्यमानायामेव स्वप्रकृतिस्थितौ प्राग् बद्धायाः स्वप्रकृतिस्थितेर्ह्रस्वकालतामपहाय दीर्घीकरणम्, अपवर्तनं नाम बध्यमानायामबध्यमानायां वा स्वप्रकृतावेव दीर्घस्थितिकालतामपहाय ह्रस्वस्थितिकालतया व्यवस्थापनम्, एतौ द्वौ मूलोत्तरप्रकृतिविषयौ भवतः । संक्रम्यमाणप्रकृतिस्थितीनां तुल्यासु स्थितिषु प्रतिग्रहप्रकृतौ नीत्वा यत् प्रवेशनं स प्रकृत्यन्तरनयनसंक्रमः, तदुक्तं पञ्चसंग्रहमूलवृत्तौ–"संक्रमप्रकृतितुल्यासु स्थितिषु निवेश्यन्त" इति, यथा मतिज्ञानावरणीयं बध्यमाने श्रुतज्ञानावरणीये, अयं संक्रमः उत्तरप्रकृतिष्वेव भवति । तत्रापि विशेषलक्षणं सामान्यलक्षणं न सर्वथाऽपवदतीति न्यायात् दर्शनमोहनीयचारित्रमोहनीययोरायुषश्चतसृणां प्रकृतीनां बन्धसंक्रमोद्वर्तनोदयावलिकागतस्थितेश्चाय संक्रमो न भवत्येवेति । नन्वमूर्तस्य कालस्य गगनमिवोद्वर्तनापवर्तनान्यप्रकृतिनयनलक्षणस्थितिसंक्रमः कथं जाघटीतीति चेत् ? उच्यते–ह्रस्वस्थितिकालोपलक्षिताः परमाणव एव शुभाशुभाध्यवसायजनिताभिनवस्थितिसमयेषूर्ध्वं यद् व्यवस्थाप्यन्ते तदुद्वर्तनम्, दीर्घकालोपलक्षिताः परमाणवः शुभाशुभाध्यवसायेन स्वाधस्तनस्थितौ यद्व्यवस्थाप्यन्ते तदपवर्तनम्, संक्रम्यमाणप्रकृतिस्थितिसमयस्थाः कर्मपरमाणवः स्वभिन्नबध्यमानप्रतिग्रहप्रकृतौ नीत्वा तुल्यसमयेषु यद् व्यवस्थाप्यन्ते स प्रकृत्यन्तरनयनलक्षणः संक्रमः, ईदृशः स्थितिसंक्रमः "सङ्ख्या मोक्षन्ति" इति न्यायेनाभिधीयमानो न विरुध्यत इत्युक्तं स्थितिसंक्रमस्य विशेषलक्षणम् । अथोत्कृष्टसंक्रमपरिमाणं प्रतिपाद्यते–तत्र प्रकृतयो द्विधा, बन्धोत्कृष्टाः संक्रमोत्कृष्टाश्च । तत्र बन्धादेव स्वमूलप्रकृतितुल्या स्थितिर्यासामुत्तरप्रकृतीनां ता बन्धोत्कृष्टाः, ताश्च सप्तनवतिस्तद्यथा–ज्ञानावरणपञ्चकं दर्शनावरणनवकमन्तरायपञ्चकं षोडशकषाया मिथ्यात्वमायुश्चतुष्टयमसातवेदनीयं नीचैर्गोत्रं नरकद्विकं तिर्यग्द्विकमेकेन्द्रियजातिः पञ्चेन्द्रियजातिस्तैजससप्तकमौदारिकसप्तकं वैक्रियसप्तकं पञ्चसंस्थानसहननेऽशुभविहायोगतिर्नीलकटुकवर्जमशुभवर्णादिसप्तकमगुरुलघुपराघातोपघातोच्छ्वासातपोद्योतानि निर्माणं त्रसचतुष्कम

स्थिरषट्कं स्थावरनाम चेति । 'नीलकटुकवर्ज'मित्यत्र कर्मप्रकृतिवृत्तिद्वये कटुकस्थाने 'तिक्त' मित्युक्तं, पञ्चसङ्ग्रहवृत्तिद्वये च सङ्क्रमोत्कृष्टासु तिक्त गृहीत, तथापि "तिक्तकृष्ण-दुरभिगन्धगुरुकर्कशरूक्षशीताना विंशति." इति पञ्चसङ्ग्रहमूलवृत्तौ, "तिक्तरसकृष्णवर्णयोस्तु श-ब्दस्याधिकार्थसंसूचनात् दुरभिगन्धगुरुकर्कशरूक्षशीताना चोत्कृष्टा स्थितिर्विंशति' सागरोपमकोटा-कोट्यः" इति पञ्चसङ्ग्रहबृहद्वृत्तौ च बन्धोत्कृष्टास्वपि तिक्तं गृहीतम् । कर्मप्रकृतिचूर्णौ तु वर्णादिविंशतिरपि बन्धोत्कृष्टासु गृहीता अवसीयते यतः सङ्क्रमोत्कृष्टासु वर्णादिवर्जा अष्टचत्वारिंशदेव गृहीतास्तथा च तद्ग्रन्थः—"तत्थ सव्वमुक्कसातो इमातो सायावेयणिज्ज-सम्मत्तसम्मामिच्छत्तणवणोकसायमणुअगतिदेवगतिबेइन्दियतेइन्दियचउरिंदियजाइआहारसत्तग अंतिम-पञ्चसंठाणेसंघयणमणुयगतिदेवगतिआणुपुव्विओ पसत्थविहायगविसुहुमअपज्जत्तसाहारणथिरसुहसु-भगसुस्सरआदेज्जजसकीत्तितित्थगरउच्चागोयाण एयासिं अडयालीसाए पगतीण सकमतो उक्कस्सं थिति लभ्यते" इति । कर्मप्रकृतौ वर्णादीना विंशतेरपि विंशतिः कोटाकोटिप्रमाणा स्थि-तिरुक्ता सभाव्यते, तदुक्तं—"वीसा सणिवणामाण", अस्य प्रतीकस्य व्याख्याया वर्णादयः सामान्येन गृहीताः, यथा पञ्चसङ्ग्रहे पार्थक्येन वर्णादीना स्थितिरुक्ता तथा कर्मप्रकृतावनु-क्तत्वेन विंशतिरपि बन्धोत्कृष्टासु गृहिता व्यवसीयत इति । पञ्चसङ्ग्रहतृतीयद्वारे पञ्चमद्वारे चोत्कृष्टस्थितिसत्कर्मस्वामित्वाधिकारे वृत्तिद्वयेऽपि कर्मप्रकृतिचूर्णौ कर्मप्रकृतिवृत्तिद्वये च तस्मिन्नेवाधिकारे बन्धनकरणप्रथमगाथावृत्तौ न्यायाचार्येरुदये सति बन्धोत्कृष्टासु वर्णादयो गृहीताः, नानुदये सति बन्धोत्कृष्टासु नाऽप्युदये सति अनुदये सति वा सङ्क्रमोत्कृष्टासु वर्णादयो गृहीताः, तथोत्कृष्टस्थित्युदीरणाधिकारेऽपि उदये सति बन्धोत्कृष्टासु विंशति-रपि वर्णादयो गृहीताः । तत्त्व पुन तद्विदो विदन्ति । ताश्च बन्धोत्कृष्टा द्वेधा—उदये सति बन्धोत्कृष्टा अनुदये सति बन्धोत्कृष्टाश्च, तत्र विपाकोदये सति यासा प्रकृतीना बन्धा-दुत्कृष्ट स्थितिसत्कर्मावाप्यते ता उदयबन्धोत्कृष्टा, यासा तु विपाकोदयाभावे बन्धादु-त्कृष्टस्थितिसत्कर्मावाप्तिस्ता अनुदयबन्धोत्कृष्टाः । तत्रानुदयबन्धोत्कृष्टा विंशति तद्यथा—नरकद्विकतिर्यग्द्विकैकेन्द्रियजात्यौदारिकसप्तकसेवार्त्तसंहननस्थावरनामातपनामानि पञ्च-निद्रेति । तत्र नरकद्विकस्योदयो नरकगतौ, उत्कृष्टस्थितिबन्धकास्तिर्यग्मनुजाः । एकेन्द्रिय-जातिस्थावरातपनाम्नामुदय एकेन्द्रियेषु, न च तत्रोत्कृष्टबन्धस्तत्र तेषा सागरोपमस्य द्वौ सप्तभागौ उत्कृष्टत स्थितिबन्धस्योक्तत्वात् । तिर्यग्द्विकस्योदयः तिर्यग्गतौ, बन्धश्चतसृष्वपि गतिषु स्यात्, तथापि उत्कृष्टस्थितिबन्धका देवनारका एव, न मनुजतिर्यञ्चः, ते हि तद्बन्धा-र्हसंक्लेशे वर्तमानास्तिर्यग्द्विकस्योत्कृष्टतोऽपि अष्टादशकोटाकोटिप्रमाणामेव स्थिति बध्नन्ति, उत्कृष्टसंक्लेशे वर्तमानास्ते तु तिर्यक्प्रायोग्य नैव बध्नन्ति, किन्तु नरकप्रायोग्यमेव बध्नन्ति । तथौदारिकसप्तकसेवार्तसंहननयोरुदयस्तिर्यग्मनुजाना, न च ते उत्कृष्टा स्थि-तिमुपरचयन्ति, किन्तु सुरनारका । निद्रापञ्चकोदये उत्कृष्टसंक्लेशाभावेन निद्रापञ्चकस्यो-त्कृष्टबन्धाभाव इति । शेषा उदयबन्धोत्कृष्टाः । बन्धेऽन्ये वा सति संक्रमादेवोत्कृष्टा स्वमूलप्रकृतिभिः समाना स्थितिर्यासामुत्तरप्रकृतीना ताः सङ्क्रमोत्कृष्टास्ताश्चेमा ...

सातवेदनीयं सम्यक्त्वं सम्यग्मिथ्यात्व नवनोकपाया आहारकसप्तकं शुभवर्णादेकादशैक नील कटुक देवद्विक मनुजद्विक विकलजातित्रिकमाद्यानि पञ्च सस्थानानि सहननानि च प्रशस्तविहायोगतिः सूक्ष्म साधारणमपर्याप्त स्थिरादिषट्कं तीर्थंकरमुच्चैर्गोत्रमिति । सक्रमोत्कृष्टा अपि द्वेधा, ताश्चाग्रे प्रतिपादित. ।

अधुनाऽऽदौ वन्धोत्कृष्टानामुत्कृष्टा वन्धस्थितिः प्रतिपाद्यते—ज्ञानावरणपञ्चक दर्शनावरणनवकमसातवेदनीयमन्तरायपञ्चकमिति विंशते प्रकृतीनां त्रिंशत्सागरोपमकोटाकोटिमाना स्थिति , कपायाणा चत्वारिंशत्कोटाकोटिप्रमाणा, मिथ्यात्वस्य सप्तति कोटाकोटिप्रमाणा, तिर्यङ्मनुजायुषो त्रिपल्योपमा, देवनारकायुषो त्रयस्त्रिंशत्सागरोपमस्थितिः, आयुपामेपा निषेककालस्थितिरवगन्तव्या, पूर्वकोटित्रिभागाभ्यधिका तु एषा सर्वास्थितिर्वाच्या, अत्र तिर्यङ्मनुजायुषी यद्यपि स्वमूलप्रकृत्यपेक्षया तुल्यस्थितिके न भवतस्तथापि सक्रमोत्कृष्टत्वाभावात्ते वन्धोत्कृष्टे उक्ते, नरकद्विकतिर्यग्द्विकैकेन्द्रियजातिपञ्चेन्द्रियजातितैजससप्तकौदारिकसप्तकवैक्रियसप्तकनीलकटुकवर्जाशुभवर्णादिसप्तकागुरुलघूपघातपराघातोच्छ्वासातपोद्योतनिर्माणान्त्यसहननसंस्थानाप्रशस्तविहायोगतिस्थावरत्रसचतुष्कास्थिरषट्कनीचगोत्रमिति पट्पञ्चाशत्प्रकृतीनामुत्कृष्टास्थितिर्विंशतिसागरोपमकोटाकोटिप्रमाणा । अथ सक्रमोत्कृष्टाना वन्धस्थिति प्रतिपाद्यते—तत्र सातवेदनीयस्त्रीवेदमनुजद्विकाना पञ्चदशकोटाकोटिप्रमाणा उत्कृष्टा स्थितिः । पुवेदहास्यरत्युच्चैर्गोत्रप्रशस्तगतिस्थिरशुभसुभगसुस्वरादेययशःकीर्तिदेवगतिदेवानुपूर्वीलक्षणाना त्रयोदशप्रकृतीनामुत्कृष्टा स्थितिर्दशसागरोपमकोटाकोटिमाना । भयजुगुप्साशोकारतिनपुसकवेदाना विंशति , सूक्ष्मनिकस्य विकलत्रिकस्य चाष्टादश, प्रथमसस्थानसहननयो शुक्लवर्णसुरभिगन्धमधुररसमृदुस्निग्धलघूष्णस्पर्शाना दशसागरोपमकोटाकोटिप्रमाणा स्थिति , द्वितीययो सहननसस्थानयोर्द्वादश, तृतीययो सहननसस्थानयोश्चतुर्दश, चतुर्थयो षोडश, वामनकीलिकयो सस्थानसहननयोरष्टादशकोटाकोटिप्रमाणा, आम्लरसहारिद्रवर्णयो. सार्ध द्वादशसागरोपमकोटाकोटिप्रमाणा, कषायरसरक्तवर्णयो' पञ्चदश, कटुकरसनीलवर्णयो सार्धसप्तदशसागरोपमकोटाकोटिप्रमाणा, तीर्थकराहारकसप्तकयोरन्त सागरोपमकोटाकोटिप्रमाणा स्थितिरिति, दर्शनद्विक वन्धे एव नास्तीत्युक्ता स्थिति सक्रमोत्कृष्टानाम् । तत्र वन्धोत्कृष्टानामुत्कृष्टस्थितिसक्रम आवलिकाद्विकहीन , तथाहि—स्थितिर्वद्धा सती वन्धावलिकायामतिक्रान्तायां सत्यामन्यत्र सक्रामति, तत्राप्युदयावलिका सकलकरणायोग्येति कृत्वा उदयावलिकोपरितनी सक्रामति, उदयावलिकामात्रमसक्रान्तमेवावतिष्ठते, ततो वन्धोत्कृष्टानामावलिकाद्विकहीन एव उत्कृष्टस्थितिसक्रम., तदुक्त—"तीसासत्तरिचत्तालीसावीसुदहिकोडिकोडीण । जेट्ठो आवलिदुगहा" इति । ज्ञानावरणपञ्चकदर्शनावरणनवकासातवेदनीयान्तरायपञ्चकरूपाणा विंशतेरावलिकाद्विकहीनत्रिंशत्सागरोपमकोटाकोटिप्रमाण. स्थितिसक्रम , तथाहि—मतिज्ञानावरणीयस्योत्कृष्टा स्थितिं बध्वा आवलिका-

तिक्रान्ताया सत्यामुदयावलिकात उपरितनीं सर्वां वध्यमानासु ... दि सक्रामति, एव सर्वत्र बन्धोत्कृष्टास्वावलिकाद्विकहीनत्व परिभावनीयमिति । ... याणामावलिकाद्विकहीनचत्वारिशत्सागरोपमकोटाकोटीप्रमाण. स्थितिसक्रमः । ... न्यप्रकृतिनयनलक्षण सक्रम एव न भवति । यद्यपि बन्धोत्कृष्टासु ... त्वमुक्त तथापि मिथ्यात्वस्य सप्ततिसागरोपमकोटाकोटिस्थितिसक्रमोऽन्तर्मुहूर्त्तोनो द्रष्ट... तथा हि–मिथ्यात्वस्योत्कृष्टा स्थिति बध्वा जघन्यतोऽप्यन्तर्मुहूर्तं मिथ्यात्व एव तिष्ठति ... सम्यक्त्व प्रतिपद्य मिथ्यात्वस्यान्तर्मुहूर्त्तोना सम्यक्त्वे मिश्रे च सक्रमयति, तदुक्त पञ्चसङ्ग्रहमूलवृत्तौ—"वेदकसम्यग्दृष्टिर्मिथ्यात्व गत्वा तस्य मिथ्यात्वस्योत्कृष्टस्थितिं च कृत्वा ततो विशुध्यमानपरिणामोऽन्तर्मुहूर्ते व्यतीते सम्यक्त्व प्रतिपन्न., तत सम्यग्दृष्टि सम्यक्त्वसम्यग्मिथ्यात्वयो... त्स्थितिमन्तर्मुहूर्त्तोनसप्ततिकोटाकोटिं प्रमाणा सक्रमयतीति" । ननूत्कृष्टस्थितिबन्धेऽबाधाकालस्य... प्युत्कृष्टत्वेनाबाधाकाले दलिकनिक्षेपाभावात् नोदय., उदयाभावे च ...दयावलिकावर्जन युक्तमिति चेत्? न, अबाधाकालेऽपि प्राग्बद्धदलिकस्यानुभवात्, तदुक्त पञ्चसङ्ग्रहमूलटीकायाम्–"यत उत्कृष्टस्थितिबन्धकस्य यदबाधागत दल तदनुभूयते प्राग्बद्धमिति कृत्वा विद्यमानतया तदस्त्येव" इति । नन्वनुदयबन्धोत्कृष्टाना कथमुदयावलिकावर्जनं युक्त तासामुदयाभावादिति चेत्? सत्यम्, किन्तूत्कृष्टबन्धकालेऽबाधाकालेऽपि प्राग्बद्धदलिकस्य विद्यमानत्वेन प्रदेशोदयतस्तद्वेदयति, तदुक्त पञ्चसङ्ग्रहमूलटीकाया–"यत उत्कृष्टस्थितिबन्धकस्याबाधास्थितय सन्ति, किन्तु... दयस्थिति स्तिबुकसङ्क्रमेणोदयगतासु सक्रामति" इति । अत एव उदयवतीनामनुदयवतीना वा प्रकृतीनामुदयसमयादारभ्यावलिकामात्रा स्थितिरुदयावलिकेति पूर्वग्रन्थेषु व्यवह्रियत इत्यनेनानुदयवतीना प्रदेशोदयावलिकापि गृहीताऽवसीयते । एव नरकद्विकादीना षट्पञ्चाशत्प्रकृतीनामप्यावलिकाद्विकहीनो विंशति सागरोपमकोटाकोटिप्रमाण उत्कृष्टस्थितिसक्रम । सक्रमोत्कृष्टानामुत्कृष्टस्थितिसक्रम आवलिकात्रिकहीन, तथाहि–बन्धावलिकायामतिक्रान्ताया सत्यामुदयावलिका मुक्त्वा उपरितनीं सर्वामपि स्थितिमन्यत्र प्रकृत्यन्तरे आवलिकाया उपरि सक्रमयति, सक्रान्ता सती सक्रमावलिका सकलकरणायोग्येति कृत्वा तदतिक्रान्ताया सत्यामुदयावलिकात उपरितनी सर्वापि स्थितिः ततोऽप्यन्यत्र प्रकृत्यन्तरे सक्रामति, ततः सक्रमोत्कृष्टानामुत्कृष्टस्थितिसक्रमपरिमाणमावलिकात्रिकहीनपरमस्थितिबन्धप्रमाणम्, तदुक्त—"सेसाण वि आवलियतिगूणो" इति । एतदेव भाव्यते–असातस्योत्कृष्टा त्रिंशत्सागरोपमकोटाकोटिप्रमाणा स्थिति बध्वा परिणामपरावर्तनेन सात बद्धु लग्न., तत्रासातस्य बन्धावलिकायामतिक्रान्तायामुदयावलिकात उपरितनीं सकलामपि स्थिति सक्रमयति, तत्र च सक्रान्ता सती सक्रमावलिका सकलकरणायोग्येति कृत्वा सक्रमावलिकातिक्रान्ताया सत्यामुदयावलिकात उपरितनीं सर्वामपि स्थितिमसात बध्नन् तत्र सक्रमयतीत्यावलिकात्रिकहीनत्रिंशत्कोटाकोटिसागरोपमप्रमाणः सातस्य स्थितिसक्रमः । शुभवर्णाद्येकादशकनीलकटुकदेवद्विकमनुजद्विकविकलजातित्रिकाद्यपञ्चसहननाद्यपञ्चसंस्थानप्रशस्तखगतिसूक्ष्मसाधारणापर्याप्तस्थिरादिषट्कोच्चैर्गोत्ररूपाणामेकचत्वारिंशत्प्रकृतीनामावलिकात्रि-

कहीनविंशतिसागरोपमकोटाकोटिप्रमाणः परमस्थितिसङ्क्रम । मनुजद्विकमाश्रित्य भावन
क्रियते—नरकद्विकस्योत्कृष्टां विंशतिसागरोपमकोटाकोटिप्रमाणां स्थितिं बध्वा परिणामपरा
वर्तनेन मनुजद्विकं बद्धु लग्नः, तत्र नरकद्विकस्य बन्धावलिकायामतिक्रान्तायामुदयावलि
कात उपरितनीमावलिकाद्विकहीनां विंशतिसागरोपमकोटाकोटिप्रमाणां स्थितिं सङ्क्रमयति
ततोऽपि परिणामपरावर्तनेन देवद्विकं बद्धु लग्न, तत्र सङ्क्रमोत्कृष्टमनुजद्विकस्थिते
सङ्क्रमावलिकायामतीताया उदयावलिकात उपरितनीमावलिकात्रिकहीनां विंशतिसागरो
पमप्रमाणां मनुजद्विकस्थितिं सङ्क्रमयति । एवमुक्तानुसारेण शेषनाम्नामपि परिभावनी
यमिति । नवनोकषायाणां चत्वारिंशत्सागरोपमकोटाकोटिप्रमाण आवलिकात्रिकहीन. प
मस्थितिसङ्क्रमो वेदितव्यः । आहारकसप्तकस्य जिननाम्नश्चोत्कृष्ट स्थितिबन्धोऽन्त सागरो
पमकोटाकोटिप्रमाणस्तस्मात् सङ्ख्येयगुणस्तस्य स्थितिसङ्क्रम., तदुक्तं कर्मप्रकृतिचूर्णौ—"बन्
ठिईओ सतकम्मट्ठिई सखेज्जगुणा" इति । ननु नामकर्मण उत्कृष्टतो विंशतिसागरोपमको
टाकोटिप्रमाणा स्थिति , अत आहारकसप्तके जिननाम्नि च सङ्क्रमात् बन्धावलिकोदया
लिकारहिता विंशतिसागरोपमकोटाकोटिप्रमाणोत्कृष्टास्थितिर्लभ्यते, कथमुच्यते सग
तोऽप्यन्त सागरोपमकोटाकोटिप्रमाणेति ? उच्यते, जिननाम्नो विशुद्धसम्यग्दृष्टेराहारकस
कस्य च विशुद्धसयमवता बन्धकत्वेन तेषामायुर्वर्जसप्तकर्मणामन्त सागरोपमकोटाकोटि
प्रमाणस्यैव सत्कर्मत्वात्, तदुक्त पञ्चसङ्ग्रहे—"तित्थयराहाराण सकमणे बन्धसन्तएसु पि
अंतोकोडाकोडी तहावि ता सकमुक्कोसा ॥ १ ॥ एयइयसतया ज सम्मदिट्ठीण सव्वकम्मेसु" इति
'एयइय सतय त्ति' एतावत्येनान्त सागरोपमकोटाकोटीप्रमाणा सत्तेति । सातवेदनीयस्य
वलिकात्रिकहीनत्रिंशत्सागरोपमकोटाकोटिप्रमाण उत्कृष्टस्थितिसङ्क्रम , भावनाऽसातवेदनी
यवत्कर्तव्या । उक्त बन्धे सति यासा सङ्क्रमादुत्कृष्टास्थिति तासामुत्कृष्टसङ्क्रमपरिमाणम

अथ बन्धाभावेऽपि यासा सङ्क्रमादेव केवलादुत्कृष्टा स्थिति तासामुत्कृष्टस्थितिसङ्क्र
प्रतिपाद्यते, तथाहि—दर्शनमोहनीयत्रयसत्कर्मा मिथ्यादृष्टिरुत्कृष्टसङ्क्लेशे वर्तमानो मिथ्या
त्वस्योत्कृष्टां स्थितिं बध्वा तत्रैवान्तर्मुहूर्तमवतिष्ठते, तत सम्यक्त्व प्रतिपद्य मिथ्यात्व
स्थितिमन्तर्मुहूर्तोना सकलामपि सम्यक्त्वे सम्यग्मिथ्यात्वे च सङ्क्रामति, ततो मिश्र
सङ्क्रमावलिकामतिक्रम्योदयावलिकात उपरितनीं सकलामपि स्थिति सम्यक्त्वे सङ्क्रमयति
अपवर्तनाकरणेन च स्वस्थानेऽपि सङ्क्रमयति, सम्यक्त्वस्यापवर्तनाकरणेन स्वस्थाने
सङ्क्रामति, तदेव मिथ्यात्वसत्कमन्तर्मुहूर्तं सङ्क्रमोदयावलिकाद्विकसहित सप्ततिमध्याद्
सम्यक्त्वमिश्रयोर्द्रष्टव्यमिति । ननु दर्शनत्रयसत्कर्मा मिथ्यादृष्टि स एव भवति यः
सम्यग्दृष्टिर्भूत्वा प्रतिपतित , तस्य चोत्कृष्ट स्थितिबन्ध एव न सभवति, "बधेण न बोल
इत्यनेन भिन्नग्रन्थिकस्य प्रतिपतितस्य मिथ्यादृष्टेरपि अन्त कोटाकोट्यधिकबन्धस्य प्र
षेधात्, ततः सर्वमिद निर्मूलमिति चेत्? न, "बधेण न बोलइ" इति सिद्धान्तमतत्वा
कार्मग्रन्थिकैः प्रतिपतितस्यापि मिथ्यादृष्टेरुत्कृष्टस्थितिबन्धस्याप्यभ्युपगमात्, तस्य त
निधरसाभावेनैव विशेषसमर्थनादिति न कश्चिद्दोष । ननु तथापि सम्यग्दृष्टेरुत्कृष्टतोऽ

न्त'सागरोपमकोटाकोटिप्रमाणमेव सत्कर्म विद्यते नाधिकं, तत' कथं ... नमसप्ततिसागरोपमकोटाकोटिप्रमाणस्थितिसंक्रमो भवतीति चेत्? सत्यं, किन्त्वनाभोगेन म्यक्त्वाच्च्युतो मिथ्यादृष्टिः पुन' करणत्रिकमकृत्वा सम्यक्त्वं प्रतिपद्यते, तस्य ... रकृष्टस्थितिसत्कर्म सभाव्यते, तत्त्व तु तद्विदो विदन्ति। ननु बन्धसक्रमौ समकं ... साधारणा एकावलिका भवति, न भिन्ना, तस्मात् सक्रमोत्कृष्टाना ... कहीनोत्कृष्टस्थितिसक्रम प्राप्नोति, नावलिकात्रिकहीन इति चेत्? न, उभयोरपि भिन्न कालत्वात्, तथाहि-पूर्वं बन्धोत्कृष्टाया' प्रकृतेरुत्कृष्टा स्थितिं बध्नाति, बन्धावलिकागत सकलकरणायोग्यमिति कृत्वा बन्धावलिकायामतिक्रान्ताया सत्यामुदयावलिकाया ... बध्यमानसङ्क्रमोत्कृष्टाया प्रकृतौ बन्धोत्कृष्टासत्क दलिक सङ्क्रमयति, ततो जाता ... तिका सङ्क्रमोत्कृष्टा प्रकृति, सङ्क्रमावलिकागतमपि सकलकरणायोग्यमिति कृत्वा ... लिकायामतिक्रान्ताया सत्या बध्यमानाया प्रकृतौ उदयावलिकात उपरितनीं सकलामपि सङ्क्रमोत्कृष्टा स्थितिं सङ्क्रामतीत्यतो भिन्नकालत्व सुस्पष्टम्। यदि बन्धोत्कृष्टसत्का ... सक्रमोत्कृष्टसत्का च बन्धावलिका गृहीता स्यात्तदा समानकालत्वं स्यात्। ननु नर... तिर्यन्धोत्कृष्टा प्रकृतिरावलिकाद्विकहीना नर्वाऽपि मनुजगतौ सक्रामति, ततो मनु... लिकात्रिकहीनाऽन्यत्र सक्रामतीत्युभयमीलने पञ्चावलिकाहीन उत्कृष्टस्थितिसङ्क्रमो भवतीति कथमुच्यते सङ्क्रमोत्कृष्टानामावलिकात्रिकहीना उत्कृष्टा स्थितिरिति चेत्? न, नरकगतिसत्कोदयावलिका सङ्क्रमावलिका च मनुजगतिसत्का बन्धावलिका च इति त्रयाणामेककालत्वान्न दोषः। यत्तु पञ्चसङ्ग्रहमूलवृत्तौ—"नरकद्विकस्य बन्धोत्कृष्टस्य या यदा उत्कृष्टास्थिति सा बन्धावलिकाहीना मिथ्यादृष्टिर्मनुजद्विकं बध्नानो मनुजद्विके सक्रमयति, ततः स एव देवद्विकं बध्नान' सक्रमोत्कृष्टान्मनुजद्विकात्सक्रमावलिकारहितामुदयावलिकारहिता च वा बन्धावलिकारहिता सक्रान्तस्थितिं देवद्विके सक्रमयती"त्युक्त, तत्र बन्धोत्कृष्टाया उदयावलिकाहीनत्व नोक्तमन्यत्र च सर्वत्रोक्त तदपि न विरोधावह, यतो नरकद्विकस्य सङ्क्रमावलिकाया उदयावलिकायाश्चैककालीनत्वेन सङ्क्रमावलिकाग्रहणेनैव गृहीता द्रष्टव्येति। ननु पञ्चसङ्ग्रहमूलवृत्तिमन्तरेण सर्वत्र नरकद्विकस्योत्कृष्टस्थितिसङ्क्रमो बन्धोदयावलिकाद्विकहीन इत्युक्त्वा तत॰ मनुजद्विकस्यापि सङ्क्रमोदयावलिकाद्विकहीनत्वमुक्त, तथा च तद्ग्रन्थः—"ततो सकमावलियाए उदयावलिए मोत्तुण उवरिल्ला ठिति सकमति" इति चेत्? सत्यं, केवल नरकद्विकस्य बन्धोत्कृष्टत्वपरिज्ञापनार्थमुदयावलिका पृथक् गृहीता, कालस्तु नरकद्विकोदयावलिकाया सङ्क्रमावलिकायाश्चाभिन्न एव, पृथक् कल्प्यमाने तु "तिआवलिऊण सकमुक्कोसट्ठितिपरिमाण" इत्यनेन विरोधापत्तेः, पञ्चसङ्ग्रहमूलवृत्तावपि तदेवाभिप्राय॰, नरकद्विकस्योदयावलिकाहीनत्वाकल्प्यमाने "बन्धुक्कोसाण ठिई मोत्तु दो आवली उ संकमइ" इत्यनेन मूलेन सह तत्रैव विरोध स्यात्। ननु तर्हि नरकद्विकस्योदयावलिकाहीनत्वकल्प्यमाने उत्कृष्टस्थित्युदीरणास्वामित्वाधिकारेऽनुदयसङ्क्रमोत्कृष्टस्य देवगतेर्मनुजानुपूर्व्याश्च स्थिते॰ कर्मप्रकृतिवृत्तिद्वये आवलिकामात्रहीनविंशतिसागरोपमकोटाकोटिप्रमाणत्वमुक्तं तत्कथं सगच्छते? तदुक्तं न्यायाचार्यैः—"देवगतेरपि विंशतिसागरोपमकोटाकोटीप्रमाणस्थितिराव-

न्त्रिकामात्रहीना जायते" "ततो मनुष्यानुपूर्व्या अपि स्थितिरावलिकामात्रहीनाविंशतिसागरोपमकोटाकोटी-प्रमाणा जाता", एवमेव श्रीमलयगिरिकृतकर्मप्रकृतिवृत्तौ पञ्चसङ्ग्रहवृहद्वृत्तौ चाप्युक्त, कर्मप्रकृतिचूर्णा "एतासिं ठिति वीसं सागरोवमकोडाकोडीओ आवलि ऊण संकमे लब्भइ" इति च, अत्र "एतासिं" ति तत्र प्रागुक्तानामनुदयसङ्क्रमोत्कृष्टानामित्यर्थ इति चेत्? अत्रोच्यते-देवगतिप्रदेशोदयसत्कोदयावलिका युता एतावत्प्रमाणैव स्थितिर्भवति, न नरकद्विकस्योदयावलिकासङ्क्रमेण सात्वत्प्रमाणा भवति, नरकद्विकस्योदयावलिकाया अपि सक्रमे कल्प्यमाने तत्रैव "नरकगतेरुत्कृष्टा स्थितिं विंशतिसागरोपमकोटाकोटीप्रमाणा वद्धा ततः शुभपरिणामविशेषभावतो देवगतेरुत्कृष्टा स्थितिं दशसागरोपमकोटाकोटीप्रमाणा वद्धुमारभते, ततस्तस्या देवगतिस्थितौ बध्यमानाया आवलिकाया उपरि बन्धावलिकाहीनामावलिकातं उपरितनीं सर्वामपि नरकगतिस्थितिं सक्रमयति" इत्युक्तस्य विरोधः स्यात् ननु "बन्धुक्कोसाण ठिई मोत्तुं दो आवली उ संकमइ" इत्यत्रोदयबन्धोत्कृष्टानां वाच्यम्, अनुदयबन्धोत्कृष्टानां त्वावलिका मुक्त्वेति चेत्? न, सर्वासां सङ्क्रमोत्कृष्टानामुत्कृष्टसक्रमकाले आवलिकाद्विकहीनत्वस्य सर्वस्थितेरुक्तत्वात्, किञ्चैवं सङ्क्रमकाले देवगतेः सर्वा स्थितिः सम्पूर्णा विंशतिसागरोपमकोटाकोटीप्रमाणा स्यात्, तथा हि-नरकगतिसत्काऽऽवलिकाहीना विंशतिसागरोपमकोटाकोटिप्रमाणा सङ्क्रमेण प्राप्ता स्वोदयावलिका च, उभयमीलने सम्पूर्णा विंशतिसागरोपमकोटाकोटीप्रमाणा, न चैतावन्मात्रा सर्वास्थितिः सङ्क्रमकाले उक्ता, नापि सत्ताधिकारे एतत्प्रमाणा उत्कृष्टा सत्ताप्युक्ता, किन्तु स्वरूपापेक्षया समयाधिकावलिकोनविंशतिसागरोपमकोटाकोटिप्रमाणा, तदुक्तं कर्मप्रकृतिवृत्तौ, तथाहि-"कश्चिन्मनुष्य उत्कृष्टसंक्लेशवशादुत्कृष्टां नरकगतिस्थितिं बध्वा परिणामपरावर्तनेन देवगतिं बद्धुमारब्धवान्। तस्यां च देवगतौ बध्यमानायामावलिकाया उपरि नरकस्थितिं बन्धावलिकातीतां उदयावलिकाया उपरितनीं सकलामपि विंशतिसागरोपमकोटाकोटीप्रमाणा सक्रमयति। प्रथमा च स्थितिः समयमात्रा देवगतेः सत्ता मनुजगतौ वेद्यमानाया स्तिबुकसक्रमेण सक्रामति। ततस्तया समयमात्रया स्थित्या ऊना आवलिकयाऽभ्यधिक आवलिकाद्विकहीनोत्कृष्टस्थितिसमागमो देवगतेरुत्कृष्टं स्थितिसत्कर्म। एवं द्वित्रिचतुरिन्द्रियजात्याहारकसप्तमनुष्यानुपूर्वीदेवानुपूर्वीसूक्ष्मापर्याप्तसाधारणतीर्थकरारव्यानामपि षोडशप्रकृतीनां यथोक्तमात्मुत्कृष्टं स्थितिसत्कर्म भावनीयम्। सम्यग्मिथ्यात्वस्य पुनरन्तर्मुहूर्तोन उत्कृष्टस्थितिसमागमः आवलिकयाभ्यधिकसमयोन उत्कृष्टं स्थितिसत्कर्म वाच्यम्। तच्च सम्यक्त्वोक्तभावनानुसारेण भावनीयम्" इति, ततो नरकद्विकस्यावश्यमेव बन्धावलिकोदयावलिकाहीनत्वं कल्पनीयमिति।

अथ सङ्क्रमकाले बन्धोत्कृष्टानां सक्रमोत्कृष्टानां वा प्रकृतीनां यावती स्थितिः प्राप्यते सोच्यते-तत्र ज्ञानावरणपञ्चकं दर्शनावरणनवकमसातवेदनीयमन्तरायपञ्चकमिति विंशतिप्रकृतीनामावलिकाहीनत्रिंशत्सागरोपमकोटाकोटिप्रमाणा सङ्क्रमकाले सर्वा स्थितिः, तथाहि सङ्क्लेशादिकरणवशात् उत्कृष्टां स्थितिं बध्वा बन्धावलिकायामतिक्रान्तायामुदयावलिका उपरितनी सर्वा स्थितिः सङ्क्रमयितुमारभ्यते, ततः सङ्क्रमप्रथमसमये उदयावलिकासहि

१ उदयावलिकातः।

बन्धावलिकारहिता सर्वा स्थितिरवाप्यते । नीचैर्गोत्रयुताना नाम्नः . । अकृतीन
बन्धावलिकाहीना उदयावलिकायुता विंशतिसागरोपमकोटाकोटिप्रमाणा सर्वा
प्राप्यते । आयुषामबाधया युता स्वस्वोत्कृष्टा स्थितिर्बन्धावलिकाहीना सर्वा
नारूपसङ्क्रमकालेऽपवर्तनारूपसङ्क्रमकाले वा सर्वा स्थितिरवाप्यते, तथाहि
मस्त्रिविध उक्त तथाप्यायुषामुद्वर्तनापवर्तनरूपद्विविध सङ्क्रमो भवति,
निषेधात्, उद्वर्तनापि द्विधा–व्याघातभाविनी, निर्व्याघातभाविनी च, एवमपवर्तनापि
उद्वर्तनापवर्तनयोर्निखिलस्वरूपमग्रे न्यक्षेण प्रतिपादयिष्यामः । इहायुषो व्याघातभावि
न्यपवर्तना नियमादुदये सति प्रवर्तते, ततो न तामधिकृत्येह सर्वा स्थिति प्रतिपाद्य
प्रवचने श्रीनेमिजिनस्य मुनिगणवन्दनेन कृष्णवासुदेवस्य पूर्वबद्धसप्तमनरकायुषस्तृती
नरकायुःकरणरूपा अपवर्तना अनुदयेऽप्युक्ता, सा प्रायोवृत्त्या सभवेत्, यदि वा तद
भिप्राय श्रीबहुश्रुतगम्यः । या तु निर्व्याघातभाविन्यपवर्तना सा उदयेऽनुदये वा बन्धाव
लिकायामतिक्रान्तायां सत्यां सर्वदा प्रवर्तते । उद्वर्तना तु बन्धे प्रवर्तमान एव प्रथमसमयब
द्धलताना बन्धावलिकातिक्रान्तायां सत्यां भवति, ततो निर्व्याघातभाव्यपवर्तनारूपे उद्वर्त
नारूपे च स्वस्थानसंक्रमे आयुषः सर्वास्थितिः बन्धावलिकारहिताऽबाधायुता प्राप्यत इति
बन्धोत्कृष्टासु मिथ्यात्वं विहाय सर्वासु प्रकृतिषु बन्धावलिकोना उत्कृष्टा बन्धस्थितिः सर्वा
स्थिति संक्रमकाले द्रष्टव्या, तदुक्त–"बन्धुक्कस्साण आवलिगूणा हिई जट्ठिई" इति । 'जट्ठिइ'त्ति
संक्रमकाले या स्थितिर्विद्यते सा यत्स्थिति सर्वा स्थितिरित्यर्थः । कषायाणां बन्धावलिका
हीनोदयावलिकायुता चत्वारिंशत्सागरोपमकोटाकोटी प्रमाणा सर्वा स्थितिः । मिथ्यात्वस्या
न्तमुहूर्तोन सप्ततिसागरोपमकोटाकोटीप्रमाणा सर्वा स्थितिरिति । संक्रमोत्कृष्टाना त्वावलि
काद्विकहीना सर्वा स्थिति संक्रमकाले प्राप्यते, यतो बन्धावलिकासंक्रमावलिकयोरतीतयो
रुदयावलिकात उपरितनी सर्वा स्थितिरन्यत्र संक्रम्यत इति, तथा हि–सातवेदनीयस्याव
लिकाद्विकोनत्रिंशत्सागरोपमकोटाकोटिप्रमाणा संक्रमकाले सर्वा स्थितिः, नवाना नोकषा
याणामावलिकाद्विकोनचत्वारिंशत्सागरोपमकोटाकोटिप्रमाणा संक्रमकाले सर्वा स्थिति
आहारकमसकजिननाम्नोरावलिकाद्विकोनान्तःसागरोपमकोटाकोटिप्रमाणा सर्वास्थिति
संक्रमकाले प्राप्यते । शुभवर्णाद्येकादशकनीलकटुकदेवद्विकमनुजद्विकविकलजातिप्रशस्त
विहायोगतिसूक्ष्मत्रिकाद्यवर्ज्यसंहननसंस्थानदशकस्थिरपञ्चकोच्चैर्गोत्ररूपाणामेकचत्वारिंशत्प्रकृ
तीनामावलिकाद्विकोनविंशतिसागरोपमकोटाकोटिप्रमाणा सर्वास्थितिः संक्रमकालेऽवाप्यते
सम्यक्त्वमिश्रयोः संक्रमावलिकायुतान्तर्मुहूर्तोनसप्ततिसागरोपमकोटाकोटिप्रमाणा सर्वा
स्थितिः, तथा हि–अष्टाविंशतिसत्कर्मा मिथ्यात्वस्योत्कृष्टा स्थितिं बद्ध्वान्तर्मुहूर्तं तत्रैव
स्थित्वा सम्यक्त्वं प्रतिपद्यते तत्समयादारभ्यान्तर्मुहूर्तोना सप्ततिसागरोपमकोटाकोटिप्रमाण
स्थिति सम्यक्त्वे मिश्रे च संक्रामति, संक्रमावलिकायामतीतायामुदयावलिकात उपरितनी
सम्यक्त्वस्य सर्वा स्थितिमपवर्तनाकरणेन स्वस्थाने, मिश्रस्य सम्यक्त्वे, अपवर्तनाकरणेन
स्वस्थाने च संक्रामति, तदानीं सर्वास्थिति संक्रमावलिकायुतान्तर्मुहूर्तोना प्राप्यत इति

## स्थितिसङ्क्रमे परप्रकृतिलतायां या सङ्क्रम्यमाणा स्थितिः सङ्क्रमकाले च सर्वा स्थितिः तयोः स्थापना

बन्धोत्कृष्टानां यथा नरकगतेः सङ्क्रमप्रायोग्याः स्थितयः

नरकगतेः बध्यमाना एताः १ OOOOO (बन्धावलि०) २ OOOOO (उदयावलिका०) | OOOOOOOOOOOOOOOOOOOOOOOOOOOOO |

अत्र प्राग्बद्धनरकगतेर्देवगतौ सङ्क्रमः
पूर्वलतायाः सङ्क्रमप्रायोग्याः स्थितयः सर्वत्र लतायामुदयावलिकावर्जासु सङ्क्रमन्ति

सङ्क्रम्यमाणनरकगतेर्बध्यमानदेवगतिरूपा पतद्ग्रहलता OOOOO | OOOOOOOOOOOOOOOOOOOOOOOOOOOOO |

देवगतेः बन्धाव० नरकगतेरुदयाव० स० आ० इति तिसृणामेककालीनत्वम्

सङ्क्रमोत्कृष्टानां यथा मनुजगतेः सङ्क्रमप्रायोग्याः स्थितयः

नरकगतेर्बध्यमाना लता १ OOOOO (बन्धाव०) OOOOO (उदयाव०) | OOOOOOOOOOOOOOOOOOOOOOOOOOOOO |

अत्र प्राग्बद्धनरकगतेः मनुजगतौ सङ्क्रमः
पूर्वलतायाः सङ्क्रमप्रायो० स्थितयः सर्वत्र लतायामुदयावलिकावर्जासु सङ्क्रमन्ति

सङ्क्रम्यमाणनरकगतेर्बध्यमानमनुजगतिरूपा प्रतिग्रहलता २ OOOOO ३ OOOOO | OOOOOOOOOOOOOOOOOOOOOOOOOO |

नरकगतेरुदयाव० सङ्क्रमाव० मनुजगतेरुदयाव० मनुजगतेश्च बन्धाव० इति तिसृणामेककालीनत्वम्

अस्या लतायाः सङ्क्रमप्रा० स्थितयः

पूर्वसङ्क्रमितलतायाः सङ्क्रमप्रायोग्याः स्थितयः उदयावलिवर्जासु सर्वत्र लतायां सङ्क्रमन्ति

सङ्क्रम्यमाणमनुजगते देवगतिरूपा प्रतिग्रहलता OOOOO | OOOOOOOOOOOOOOOOOOOOOOOOOO |

मनुजगतेरुदयाव० सङ्क्रमाव० देवगतेश्च बन्धाव० इति तिसृणामेककालीनत्वम्

अत्र या उदयावलिका सा उदयवतीनां विपाकोदयावलिका अनुदयवतीनां च प्रदेशोदयावलिका इति। अस्या स्थापनाया अनुसारेण बन्धोत्कृष्टानामावलिकाद्विकोना सङ्क्रमस्थितिः १–२ इति अङ्कतः, सङ्क्रमोत्कृष्टानां चावलिकात्रिकहीना सङ्क्रमस्थितिः १–२–३ इति अङ्कतः अङ्किता। परप्रकृतिलतायां सङ्क्रम्यमाणदलिकमुदयावलिकायां न सङ्क्रमति इति उदयावलिकायाः सर्वत्र वर्जनं कृतम्।

( उदीरणापवर्तनयोरेवोदयावलिकासु दलिकप्रक्षेपः स्यादत्र )

ननूदयबन्धोत्कृष्टादिसंज्ञाचतुष्काधिकारे बन्धोत्कृष्टाना प्रकृतीनां पादोन शत, संक्रमो
त्कृष्टा प्रकृतयः त्रिचत्वारिंशत्, उत्कृष्टस्थितिसत्कर्मस्वामित्वाधिकारे बन्धोत्कृष्टाना प्रकृती
ना षडधिकशतं, संक्रमोत्कृष्टाः प्रकृतयः अष्टचत्वारिंशत्; संक्रमाधिकारे बन्धोत्कृष्टाः स
नवति, संक्रमोत्कृष्टा एकषष्टिरिति पञ्चसङ्ग्रहवृत्तिद्वये कर्मप्रकृतिवृत्तिद्वये च। कर्मप्रकृ
चूर्णौ तु संक्रमाधिकारे संक्रमोत्कृष्टाः प्रकृतयोऽष्टचत्वारिंशत्, शेषाः बन्धोत्कृष्टाः, उत्कृ
स्थितिसत्कर्मस्वामित्वाधिकारे बन्धोत्कृष्टानां प्रकृतीना षडधिकं शत, संक्रमोत्कृष्टाः
अष्टचत्वारिंशदिति कथ न विरोध इति चेत्? न, अभिप्रायापरिज्ञानात्, तथा हि–उद
बन्धोत्कृष्टादिसंज्ञाचतुष्काधिकारे बन्धोदयापेक्षया द्वात्रिंशत्यधिक प्रकृतीना शत गृही
तत्राप्यायुषा परस्परसंक्रमाभावात् प्रयोजनाभावाच्च न कापि संज्ञा कृता, तदुक्तं–"आयु
तु नान्योऽन्य संक्रमो, नापि बध्यमानायुर्दलिक पूर्वबद्धायुषः उपचयायालम्। ततस्तिर्यग्मनुष्यायुषो
त्कृष्टा स्थितिर्न कथमपीति तेऽनुदयबन्धोत्कृष्टादिसंज्ञाचतुष्टयातीते, देवनरकायुषी त्वनुदयबन्धोत्कृष्टे
प्रयोजनाभावात् पूर्वाचार्यैः संज्ञाचतुष्टयातीते निक्षिप्ते" इति। उत्कृष्टस्थितिसत्कर्माधिकारे तु
केनाप्यायुश्चतुष्कं गृहीतं, ननु तर्हि संक्रमाधिकारे सर्वैरपि बन्धोत्कृष्टा संज्ञाऽऽयुषा कृते
कथ न विरोधः? सत्य, सत्त्वाधिकारे प्रयोजनाभावात्, अत्र तूद्वर्तनापवर्तनसंक्रमसभ
सप्रयोजना, तदुक्तं पञ्चसंग्रहमूलवृत्तौ–"आह तृतीयद्वारे आयुष्काणि चतसृणामपि संज्ञा
याहानि कृतान्यत्र तु बन्धोत्कृष्टान्युक्तान्येव विरोध, अत्रोच्यते–तदधिकारे प्रकृत्यन्तरसंक्रम चा
त्य संज्ञाकरण व्यर्थमिति तत्र न कृत, अत्र तु उद्वर्तनापवर्तनाधिकारे सार्थकत्वात् कृतमिति न दो
इति। चूर्णिकृदन्तरेण सर्वैरपि संक्रमाधिकारे पञ्चसंग्रहकाराभिप्रायः स्वीकृत, अत
संक्रमोत्कृष्टासु अष्टचत्वारिंशदुक्ताः प्रकृतय। ननूभयोः को भेदः? श्रूयता पञ्चसंग्रहकृ
वर्णादिविंशतिप्रकृतीना बन्धस्थितिः पृथगुक्ता, बन्धनानि च पञ्चाभिप्रेतानि, शिवशर्मसू
पादैः सामान्येन वर्णादीना विंशतिसागरोपमकोटाकोटिप्रमाणा स्थितिरुक्ता, बन्धनानि
पञ्चदश स्वीकृतानीति विशेष। ननु किमिदं प्रकृतीनां संज्ञा चतुष्कमिति चेत्? उच्य
तत्र विपाकोदये प्रवर्तमाने सति संक्रमत एवोत्कृष्टा स्थितिर्यासामुत्तरप्रकृतीना समुपल
ते, न बन्धत, ता उदयसंक्रमोत्कृष्टाः, ताश्चेमा–मनुजगति, सातवेदनीय, सम्यक्त्व,
रादिषट्क, हास्यादिषट्क, वेदत्रिक, प्रशस्तविहायोगतिः, आद्यानि पञ्च संहननानि, पञ्च सं
नानि, उच्चैर्गोत्रमिति त्रिंशत्। उदयप्राप्तानामेतासा प्रकृतीना या प्रतिपक्षीभूता नरकग
दयः प्रकृतयस्तासामुत्कृष्टा स्थितिं बद्ध्वा पुनस्ता एव बद्धु लग्न, तत्र प्राग्बद्धविपक्षप्रकृत
दलिक संक्रमयति, शुभप्रकृतीना प्रायः स्वबन्धतः स्थितिः स्तोकैव भवतीति संक्रमतः ।
सामुत्कृष्टा स्थितिरवाप्यते, तथा हि–सातं वेदयमानोऽसातोत्कृष्टां स्थिति बध्वा पुनः
बद्धुं लग्न, तत्रासातस्य बन्धावलिकातिक्रान्तायामुदयावलिकात उपरितनीं सर्वां संक्राम
तदोत्कृष्टस्थितिका भवति साता, एवमन्यासामपि प्रकृतीना वाच्यम्। यासामुत्तरप्रकृ
नामुदयाभावे एव संक्रमत उत्कृष्टा स्थितिः प्राप्यते ता अनुदयसंक्रमोत्कृष्टाः, ताश्च मनु

नुपूर्वीमिश्राहारकद्विकदेवद्विकविकलत्रिकसूक्ष्मत्रिकजिननामलक्षणास्त्रयोदश । एतासा तु स्वबन्धत उत्कृष्टा स्थितिर्न लभ्यते, किन्तु सक्रमतः, सक्रमतोऽपि तदोत्कृष्टा स्थितिर्भवति यदैतत्प्रतिपक्षप्रकृतीनामुत्कृष्टा स्थिति बध्वा तदुत्तरकालमेतासु बध्यमानासु तद्दलिक सक्रमयति । विपक्षप्रकृतीना तु प्राय उत्कृष्टस्थितिबन्धको मिथ्यादृष्ट्यादिमनुष्य , न चैतासा तदानीमुदयोऽस्तीत्यनुदयसक्रमोत्कृष्टा , तथा हि—उत्कृष्टसक्लेशे वर्तमानो मिथ्यादृष्टिर्नरकद्विकस्योत्कृष्टा स्थिति बध्वा पुन परिणामपरावर्तनेन देवद्विक बद्धु लग्न , तत्र नरकद्विकस्य बन्धावलिकायामतिक्रान्तायामुदयावलिकात उपरितनीं सर्वामपि स्थिति सक्रमयति, तदा देवद्विकस्योत्कृष्टा स्थितिर्भवति, एवमन्यासामपि भावनीयमिति । उदयबन्धोत्कृष्टा अनुदयबन्धोत्कृष्टा प्राग्वर्णिताः । आयुषा सक्रमाभावे कारण प्रागुक्तमेवेति । उक्तमुत्कृष्टस्थितिसक्रमपरिमाणम् ।

उत्कृष्टसक्रमस्थितेर्यत्स्थितेश्च प्रमाणम्

| प्रकृतिषु | सक्रमस्थितिप्रमाण | यत्स्थिते प्रमाण |
|---|---|---|
| मिथ्यात्ववबन्धोत्कृष्टाना | आवलिकाद्विकहीन | एकाव० हीन |
| सक्रमोत्कृष्टाना | आवलिकात्रिकहीन | आव० द्विकहीन |
| मिथ्यात्वस्य | अन्तमु० हीन ७० सा० को० को० | अन्तमु० हीन ७० सा० को० को० |
| सम्यक्त्वमिश्रयो | आवलिकाद्विकाधिकान्त मु०हीन ७० सा०को० | सावलिका तमु० ही० ७० सा० को० |

अथ जघन्यस्थितिसक्रमपरिमाणमुच्यते—जघन्यस्थितिसक्रमो द्विविध —स्वप्रकृतौ परप्रकृतौ च । उभयत्राप्युदयावलिकाया योऽन्तिमप्रक्षेप स जघन्यस्थितिसक्रम , तेनोदयावलिकाया बहिर्भागेऽपि य प्रक्षेप स जघन्यस्थितिसक्रमो न भवतीति सिद्धम् । एतल्लक्षण निद्राद्विकव्यतिरेकेण वाच्य, निद्राद्विकस्य तु तृतीयावलिकाऽसख्येयभागाधिकावलिकाद्विकस्योपरितनी समयमात्रा स्थिति स्वसक्रमान्तेऽधस्तन्या आवलिकाया समयाधिके त्रिभागे निक्षिप्यते, तदा जघन्यस्थितिसक्रमो भवति, न तु मतिज्ञानावरणादीनामिव समयाधिकावलिकाशेषायामिति । अत्र वस्तुस्वभावमन्तरेण नान्यो हेतु सभाव्यते, सक्रमकाले सर्वा स्थितिरसख्येयभागाधिकावलिकाद्विकप्रमाणा, तदुक्त—"निद्दादुगस्स एगा आवलियदुग असखभागो अ" इति । ज्ञानावरणपञ्चकान्तरायपञ्चकदर्शनावरणचतुष्कान्तिमलोभसम्यक्त्वायुश्चतुष्करूपाणा विशतिप्रकृतीना स्वस्वसत्ताव्यवच्छेदसमये समयाधिकावलिकाशेषाया स्थितौ उदयावलिका सकलकरणायोग्येति कृत्वा तस्या अपवर्तना न भवतीति उदयावलिकाया उपरितनी समयमात्रा स्थिति समयाधिकोदयावलिकात्रिभागेऽपवर्तनासक्रमेण सक्रामति, एष. समयमात्रो जघन्यस्थितिसक्रम , सर्वा स्थिति समयाधिकावलिकामात्रेति । हास्यरत्यरतिशोकभयजुगुप्सारूपस्य हास्यषट्कस्य क्षपकोऽपवर्तनाकरणेन सख्येयवर्षप्रमाणा स्थितिं करोति, ततस्तस्या स्वनिर्लेपनावसरे सज्वलनक्रोधरूपे परप्रकृतौ प्रक्षिप्यमाणाया जघन्यस्थितिसक्रमो भवति, अस्याश्च सख्येयवर्षप्रमाणाया स्थिते रपवर्तनाकरणेनापवर्त्य सज्वलनक्रोधस्योदयावलिकाया प्रक्षेपो वाच्य , अन्यथा स्थिते प्रभू-

तत्त्वेनोदयावलिकाया बहिर्भागेऽपि प्रक्षेपः स्यात् । तथा च सति 'अन्यप्रकृतेरुदयावलिकाया योऽन्तिमः प्रक्षेपः स जघन्यस्थितिसंक्रमः' इति प्रागुक्तं लक्षणं विरुध्येत । संक्रमकाले सर्वा स्थितिरन्तर्मुहूर्ताभ्यधिकसंख्येयवर्षप्रमाणा, तथाहि–अन्तरकरणे वर्तमानः संख्येयवर्षप्रमाणां स्थितिं संज्वलनक्रोधस्योदयावलिकायां संक्रमयति, अन्तरकरणे च हास्यषट्कस्य दलिकं न विद्यते किन्तु तत ऊर्ध्वं, ततोऽन्तरकरणसत्केनान्तर्मुहूर्तेनाभ्यधिकसंख्येयवर्षप्रमाणा जघन्यस्थितिसंक्रमकाले सर्वा स्थितिः प्राप्यत इति । पुंवेदस्य संज्वलनत्रिकस्य चाबाधोनस्वजघन्यस्थितिबन्धो जघन्यस्थितिसंक्रमः, तथाहि–पुंवेदस्याष्टौ संवत्सराणि, संज्वलनक्रोधस्य मासद्वयं, संज्वलनमानस्य मासः, संज्वलनमायायाः पञ्चदश दिनानि, आन्तर्मौहूर्त्तिकी चाबाधा, अबाधाकालहीना च कर्मस्थितिर्जघन्यस्थितिसंक्रमः । अबाधाकालहीनैव स्थितिरन्यत्र संक्रामति, तत्रैव दलस्य संभवात्, अबाधाहीनायाः कर्मस्थितेर्निषेकरूपत्वात्, न च जघन्यस्थितिसंक्रमकाले प्राग्बद्धदलिकमबाधाया मध्येऽपि विद्यते, सर्वस्य क्षीणत्वात् । ततः पुंवेदादीनामन्तर्मुहूर्तोना स्वकीया स्वकीया जघन्या स्थितिर्जघन्यस्थितिसंक्रमः, जघन्यसंक्रमकाले च सर्वा स्थितिरबाधायुक्तो जघन्यस्थितिबन्ध आवलिकाद्विकोनो द्रष्टव्यः । नन्वावलिकाद्विकोनत्वं कथमिति चेत् ? उच्यते बन्धव्यवच्छेदानन्तरं बन्धावलिकायामतीतायां चरमसमयबद्धा पुंवेदादिप्रकृतिलता संक्रमयितुमारभ्यन्ते, आवलिकामात्रेण कालेन च ताः संक्रम्यन्ते, संक्रमावलिकायाश्चरमसमये च जघन्यस्थितिसंक्रमः प्राप्यते, ततो बन्धावलिकासंक्रमावलिकोनोऽबाधाकालयुतो जघन्यस्थितिबन्धः जघन्यस्थितिसंक्रमकाले सर्वा स्थितिः प्राप्यते । अत्र यद्यपि समयोनावलिकाद्विकहीना सर्वास्थितिर्जघन्यस्थितिसंक्रमकाले प्राप्यते, यतः संक्रमावलिकायाश्चरमसमये दलिकस्य संक्रम्यमाणत्वेन तत्समयोनत्वं न संभवति, अन्यथा मतिज्ञानावरणादीनामपि सर्वा स्थितिरावलिकामात्रैव प्राप्नोति न समयाधिकावलिकामात्रेति, तथापि सर्वैः पूर्वपुरुषैरावलिकाद्विकोनत्वं उक्तमतोऽत्र किमपि हेतुः स्यात् ततोऽस्माभिरपि तथैवोक्तं । जघन्यस्थितिसंक्रमस्वामित्वपर्यवसाने पुंवेदस्य–"तस्स समयूण दुआवलिय (हीणजहन्न) बन्धो सव्वन्हुगो(गे) ठितिसंकमो(से) लब्भति" इति चूर्णावुक्तमपि । केवलं पुरुषवेदस्य पुरुषवेदारूढ एव जघन्यस्थितिसंक्रामकः, न शेषवेदारूढः, तथाहि–पुंवेदोदयेन क्षपकश्रेणीं प्रतिपन्नस्य पूर्वं हास्यादिषट्कं क्षीयते, ततः पुंवेदः, शेषवेदोदयेन प्रतिपन्नस्य तु हास्यादिषट्केन समकं पुंवेदः क्षीयते, ततः पुंवेदेन क्षपकश्रेणीं प्रतिपन्नस्य कालबाहुल्यं, किञ्च यस्य वेदस्योदयस्तस्योदीरणापि प्रवर्तते, ततः पुंवेदेन क्षपकश्रेणीमारोहतः पुंवेदस्य बह्वी स्थितिस्त्रुट्यति, ततः पुंवेदेन क्षपकश्रेणीं प्रतिपन्नस्य पुंवेदस्य जघन्यस्थितिसंक्रमो लभ्यते, न शेषवेदारूढस्येति । मनुजद्विकदेवद्विकपञ्चेन्द्रियजात्यौदारिकसप्तकवैक्रियसप्तकाहारकसप्तकतैजससप्तकसंहननषट्कसंस्थानषट्कवर्णादिविंशतिखगतिद्विकापर्याप्तास्थिरषट्कत्रसादिदशकातपोद्योतवर्जप्रत्येकषट्करूपाणां नामकर्मणो नवतिप्रकृतीनां सातासातवेदनीयोच्चैर्गोत्रनीचैर्गोत्राणां च जघन्यस्थितिसंक्रमोऽन्तर्मुहूर्तप्रमाणः । तथाहि–एतासां सयोगिकेवलिचरमसमयेऽन्त-

मुहूर्त्तप्रमाणा स्थितिर्विद्यते, सा च तस्मिन्नेव समये सर्वापवर्तनयाऽपवर्त्यायोग्यवस्थासमाना क्रियतेऽयोग्यवस्थाप्यान्तर्मौहूर्तिकी, केवलमिदमन्तर्मुहूर्तं लघुतरमवसेयम्, सर्वापवर्तनयाऽपवर्त्यमाना उदयावलिकारहिता स्थितिर्जघन्यस्थितिसंक्रमः, उदयावलिका च सकलकरणायोग्यत्वेनानपवर्तनीया अपवर्तनरूपजघन्यस्थितिसंक्रमकाले उदयावलिकायुता सर्वा स्थितिः । ननु क्षीणकषाये मतिज्ञानावरणादीनामिवायोगिकेवलिनि समयाधिकावलिकाशेषाया स्थितौ वर्तमानो जघन्यस्थितिसंक्रमं कथं न करोतीति चेत्? न, सूक्ष्मबादरयोगरहितत्वेनायोगिकेवलिनि करणमात्रस्याप्रवर्तनादिति । स्त्यानर्द्धित्रिकमिथ्यात्वसम्यग्मिथ्यात्वानन्तानुबन्ध्यप्रत्याख्यानप्रत्याख्यानावरणनपुंसकस्त्रीवेदनरकद्विकतिर्यग्द्विकाद्यजातिचतुष्कस्थावरसूक्ष्मातपोद्योतसाधारणरूपाणां द्वात्रिंशत्प्रकृतीनां स्वस्वक्षपणकाले यश्चरमप्रक्षेपः पल्योपमासंख्येयभागरूपः स जघन्यस्थितिसंक्रमः । जघन्यस्थितिसंक्रमकाले सर्वा स्थितिः रुदयावलिकायुक्तः पल्योपमासंख्येयभागः । इयं च सर्वा स्थितिः स्त्रीनपुंसकवेदव्यतिरिक्ताभिहिता द्रष्टव्या, यतः स्त्रीनपुंसकवेदवर्जानां त्रिंशत्प्रकृतीनामेकामधस्तादावलिकां मुक्त्वा शेषमुपरितनं पल्योपमासंख्येयभागमात्रं चरमखण्डमन्यत्र संक्रमयति, ततस्तासां जघन्यस्थितिसंक्रमकाले सर्वा स्थितिरावलिकायुता पल्योपमासंख्येयभागमात्रा । स्त्रीनपुंसकवेदयोरन्तरकरणे स्थितः सन् चरमस्थितिखण्डं संक्रमयति, अन्तरकरणे च कर्मदलिकं न विद्यते, किन्तु तत ऊर्ध्वम्, अन्तरकरणं चान्तर्मुहूर्त्तप्रमाणम्, ततस्तयोरन्तरकरणयुक्ता पल्योपमासंख्येयभागमात्रा सर्वा स्थितिः संभवतीत्युक्तं जघन्यस्थितिसंक्रमप्रमाणम्, जघन्यस्थितिसंक्रमकाले यत्स्थितिप्रमाणं च ।

अथ काः प्रकृतयः स्वप्रकृतौ काश्च परप्रकृतौ संक्रामन्तीति स्पष्टीक्रियते—क्षीणमोहसत्का निद्राद्विकज्ञानावरणपञ्चकदर्शनावरणचतुष्कान्तरायपञ्चकरूपाः षोडशप्रकृतयः स्वप्रकृतावेव संक्रामन्ति । सयोगिचरमसमयसत्कचतुर्नवतेर्मध्याद्या उदयवत्यस्ताः स्वप्रकृतौ, यास्त्वनुदयवत्यस्ता उदयवतीषु परप्रकृतिषु संक्रामन्तीति संभाव्यते, आयुश्चतुष्टयसंज्वलनलोभसम्यक्त्वरूपाः षट् स्वप्रकृतौ इति । हास्यषट्कपुंवेदसंज्वलनत्रिकरूपा दश प्रकृतयः परप्रकृतौ, स्त्यानर्द्धित्रिकादिद्वात्रिंशत्प्रकृतयोऽपि परप्रकृतौ संक्रामन्ति । पुंवेदस्य दलिकं जघन्यस्थितिसंक्रमकाले बध्यमानसंज्वलनक्रोधे संक्रामति, तदुक्तं—"पुंवेदमपि समयोनद्व्यावलिकारूपेण कालेन क्वापि गुणसंक्रमेण संक्रमयन् चरमसमये सर्वसंक्रमेण संक्रमयति, एवं क्षीणपुरुषवेद" इत्यत्र गुणसंक्रमप्रतिपादनेन बध्यमानसंज्वलनक्रोधादिके प्रक्षिपतीत्यवसीयते । अबध्यमानाशुभप्रकृतीनां दलिकस्य बध्यमानप्रकृतिषु प्रतिसमयमसंख्येयगुणवृद्ध्या प्रक्षेपणं गुणसंक्रम इति । ननूदयवतीनां पुरुषवेदादिप्रकृतीनामपि उदयावलिकासु प्रक्षेपे का क्षतिरिति चेत्? न, "चरमस्थितिखण्डमन्तर्मुहूर्तेन कालेनोत्कीर्यते, तस्य च यत्प्रदेशाग्र

१ उदयवति संज्वलनक्रोधादावपि यावत्प्रमाणा बध्यमानायां प्रक्षिपति तावत्प्रमाणा स्थितिस्तस्मिन्नेव समये उदयसमाश्रय प्रकृत्यागपि प्रक्षिपतीति चेत्, अन्यथा जघन्यस्थितिसंक्रमलक्षणस्यैव व्याहतेः, ।

तदुदयावलिकागतं मुक्त्वा शेषं सर्वमपि परस्थाने प्रक्षिप्यते" इति वचनस्य ।वर्' .
वस्तुगत्या क्षपणकाले चरमसमये उदयाभावेनोदयवतीत्वलक्षणायोगात् न ता उदयवत्य

जघ० स्थि० संक्रमप्रमाणयन्त्रम् ।

| प्रकृतीनां | जघ० स्थि० संक्रमप्रमाण | जघ०यत्स्थिति प्रमाण | कदा ? |
|---|---|---|---|
| ज्ञाना० ५ दर्श० ४ विघ्न ५ सं० लोभ सम्य० ४ आयुषां | १ समयमात्र | समयाधिकाव० १ १ | समयाधिकावलिकाशेषे सत्ताविच्छेदसमये (अपवर्तनया) |
| निद्रा-प्रचलयोः | १ समयमात्र | २ आव० आव० असं० भागाधिका | आ० असंख्येयभागाधिके वलिकाद्विकशेषे संक्रमान्ते (अपवर्तनया) १२ में |
| हास्या० ६<br>पुंवेदस्य<br>सं० क्रोधस्य<br>सं० मानस्य<br>सं० मायाया | संख्येयवर्षाणि<br>अबाधोन ८ वर्षा०<br>अबाधोन २ मास०<br>अबाधोन १ मास०<br>अबाधोन ०॥ मास० | अन्तमु०अधिकसंख्येयव०<br>२ आव०ऊन ८ वर्ष<br>,, २ मास०<br>,, १ मास०<br>,, ०॥ मास० | स्वसंक्रमावलिकान्त्य समये पुनः दशापि परप्रकृतौ |
| नरक २-तिर्य० २-कुजा ति ४-स्था० सू०-सा धा०-आत० उद्योत इति १३ वर्ग नाम २० वेदनीय २ गोत्राणां २ | उदयावलिकारहित अन्तर्मुहूर्त | उदयाव० सहान्तमुहूर्त | सयोगिकेवलिगुणस्थानान्ते (सर्वापवर्तनया) |
| उत्कर्षाणां १० | पल्योपमाऽसंख्येय भाग | पल्योपमाऽसं० भाग० संक्रमात्र० सहित | स्वक्षपणकाले |
| स्त्री-नपुंसकयोः | पल्योपमासंख्येयभाग | अन्तरकरणरूपमन्तमु० अधिकपल्योपमासंख्येयभाग | ,, |

अथ साद्यादिप्ररूपणा क्रियते—सा मूलप्रकृतीनामुत्तरप्रकृतीनां च, तत्र ज्ञानावरण-दर्शनावरणवेदनीयायुर्नामगोत्रान्तरायाणामजघन्यस्थितिसंक्रमस्त्रिविधः, तद्यथा—अनादि-र्ध्रुवोऽध्रुवश्चेति। ज्ञानावरणदर्शनावरणान्तरायाणां क्षीणकषायस्य समयाधिकावलिकाशेषायां स्थितौ वर्तमानस्य जघन्यस्थितिसंक्रमो भवति, वेदनीयायुर्नामगोत्राणां सयोगिकेवलिचरम-समयेऽन्तर्मुहूर्तप्रमाण उदयावलिकारहितो जघन्यस्थितिसंक्रमः, स च सादिरध्रुवश्च, तस्मा-दन्यः सर्वोऽपि स्थितिसंक्रमोऽजघन्यः, स चानादिः, ध्रुवोऽभव्यानाम्, भव्यानामध्रुवः। ननु चतुर्णामप्यायुषां चरमोदयावलिकायां संक्रमाभावेन साद्यध्रुव एव स्थितिसंक्रमोऽ-

न्यत्रोक्त, कथमुच्यतेऽत्रायुषोऽजघन्यस्थितिसंक्रमस्त्रिविध इति चेत्? सत्यम्, उत्तरप्रकृतीनां तथात्वेऽपि मूलप्रकृतेर्न बाधः, देवाद्यायुषश्चरमावलिकायां संक्रमाभावेऽपि तत्रागामिभवायुषोऽपवर्त्तनाया विद्यमानत्वान्नात्र दोष, एवमन्यत्रापि वाच्यम्। मोहनीयस्याजघन्यस्थितिसंक्रमश्चतुर्विध, तद्यथा–सादिरनादिर्ध्रुवोऽध्रुवश्चेति। तत्र क्षपकस्य सूक्ष्मसम्परायगुणस्थानस्य समयाधिकावलिकाशेषायां स्थितौ वर्तमानस्य जघन्यस्थितिसंक्रमो भवति, स च सादिरध्रुव। तस्मादन्य सर्वोऽप्यजघन्य, स च क्षायिकसम्यग्दृष्टेरुपशान्तमोहे न भवति, तत प्रतिपाते सति भवतीति सादि, तत्स्थानमप्राप्तस्यानादि। अभव्यस्य ध्रुव, भव्यस्याध्रुव। अष्टानामपि कर्मणां उत्कृष्टानुत्कृष्टजघन्यरूपास्त्रयोऽपि विकल्पा सादयोऽध्रुवाश्च भवन्ति। तथाहि—उत्कृष्टसंक्लेशे वर्तमान उत्कृष्टां स्थितिं बध्नन् उत्कृष्टं संक्रमं करोति, उत्कृष्टसंक्लेश कदाचिदेव भवति, न तु सर्वदा, तत उत्कृष्टबन्धसंक्रमौ कदाचिदेव भवत, तत प्रतिपातेऽनुत्कृष्ट, तस्माद्द्वावप्येतौ साद्यध्रुवौ, जघन्यस्त्वजघन्यसंक्रमाधिकारे भावित एवेति मूलप्रकृतीनां साद्यादिप्ररूपणा कृता।

अथोत्तरप्रकृतीनां सा क्रियते। तत्र पञ्चज्ञानावरणनवदर्शनावरणवेदनीयद्विकमिथ्यात्वमोहनीयतिर्यग्द्विकौदारिकसप्तकतैजससप्तकजातिपञ्चकसंहननषट्कसंस्थानषट्कवर्णादिविंशतिखगतिद्विकत्रसादिविंशतिजिनवर्जप्रत्येकप्रकृतिसप्तकनीचैर्गोत्रान्तरायपञ्चकरूपाणां ध्रुवसत्कर्मणां पञ्चोत्तरशतप्रकृतीनां स्वस्वक्षपणपर्यवसाने जघन्यस्थितिसंक्रमो भवति। तथाहि—ज्ञानावरणान्तरायदशकदर्शनावरणचतुष्करूपाणां चतुर्दशप्रकृतीनां क्षीणकषायस्य समयाधिकावलिकाशेषायां जघन्यस्थितिसंक्रमो भवति, निद्राद्विकस्य क्षीणमोहस्य समयाधिकावलिकासंख्येयभागाभ्यधिकावलिकाद्विकशेषायां जघन्यस्थितिसंक्रमो भवति। स्त्यानर्द्धित्रिकतिर्यग्द्विकाद्यजातिचतुष्कस्थावरसूक्ष्मसाधारणातपोद्योतमिथ्यात्वरूपाणां ध्रुवसत्कर्मणां पञ्चदशप्रकृतीनां स्वस्वक्षपणकाले चरमप्रक्षेपे जघन्यस्थितिसंक्रमो भवति। वेदनीयद्विकौदारिकसप्तकतैजससप्तकपञ्चेन्द्रियजातिसंहननषट्कसंस्थानषट्कवर्णादिविंशतिखगतिद्विकत्रसदशकापर्याप्तास्थिरषट्कागुरुलघुपराघातोपघातोच्छ्वासनिर्माणनीचैर्गोत्ररूपाणां ध्रुवसत्कर्मणां चतुःसप्ततिप्रकृतीनां सयोगिकेवलिचरमसमये जघन्यस्थितिसंक्रमो भवति। स च सादिरध्रुवश्च। तस्मादन्य सर्वोऽप्यजघन्यः स चानादि, भव्यानामध्रुवोऽभव्यानां ध्रुव। चारित्रमोहनीयसत्कानां पञ्चविंशतिप्रकृतीनामजघन्यस्थितिसंक्रमश्चतुर्धा, तद्यथा–सादिरनादिर्ध्रुवोऽध्रुवश्चेति। तथाहि–उपशमश्रेण्यां वर्तमानस्योपशान्तमोहस्य न भवति, तत प्रतिपाते च भवतीति सादि, तत्स्थानमप्राप्तस्यानादि, ध्रुवोऽभव्यानाम्, अध्रुवो भव्यानाम्। उत्कृष्टानुत्कृष्टजघन्येषु स्थितिसंक्रमविकल्पेषु द्विप्रकार सादिरध्रुवश्चेति। तत्र जघन्यो भावित, उत्कृष्टानुत्कृष्टौ मूलप्रकृतिवद्भाव्यौ। नरकद्विकमनुजद्विकाहारकसप्तकवैक्रियसप्तकदेवद्विकतीर्थंकरसम्यक्त्वमिश्रमोहनीयोच्चैर्गोत्रायुश्चतुष्टयरूपाणामष्टाविंशतिप्रकृतीनां चत्वारोऽपि विकल्पा सादयोऽध्रुवाश्चेति। साद्यध्रुवता चाध्रुवसत्कर्मत्वादेवावसेयेति उक्ता साद्यादिप्ररूपणा।

## मूलप्रकृतिषु स्थितिसंक्रमस्य साद्यादिभंगयन्त्रम् ।

| मूलप्रकृतयः | अजघन्यः | | | | जघन्यः | | | | अनुत्कृष्टः | | | | उत्कृष्ट | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| | सादि | अध्रुव | अना० | ध्रुव | सादि | अध्रुव | अना० | ध्रु० | सादि | अध्रुव | अना० | ध्रुव | सादि | अध्रु० | अना० | ध्रुव |
| ज्ञाना० दर्श० अन्त० | — | अजघन्यस्य क्रमकाले व्यवच्छे० | भव्यस्य | अभव्यस्य | १२ मे गु० समयाधिकावलिशेषे | विच्छेद भावात् | — | — | परावर्त्त मानत्वात् | परावर्त्त मानत्वात् | — | — | पराव० | पराव० | — | — |
| नाम–गोत्र–वेदनीय–आयु० | — | " | " | " | १३ मान्ते | " | — | — | " | " | — | — | " | " | — | — |
| मोहनीय० | क्षायिको पशमकस्य ११ त प्रतिपततः | भव्यानां | सत्ता प्राप्तस्य | अभ० | क्ष० १०मे | " | — | — | " | " | — | — | " | " | — | — |

## उत्तरप्रकृतिषु स्थितिसंक्रमस्य साद्यादिभंगयन्त्रम् ।

| उत्तरप्रकृतयः | अजघन्य | | | | जघन्यः | | | | अनुत्कृष्ट | | | | उत्कृष्टः | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| | सादि | अध्रुव | अना० | ध्रुव | सादिः | अध्रुव | अना० | ध्रुव | सादि | अध्रुव | अना० | ध्रु० | सादि | अध्रु० | अना० | ध्रुव |
| २५ चारित्र मोहनीयानाम् | ११ त पतितस्य | भव्यानां | तत्स्था नाप्राप्तस्य | अभ० | स्वक्षय काले | भव्यानां | — | — | उत्कृष्टेन परावर्त्त मानत्वात् | परावर्त्त-मानत्वात् | — | — | अनुत्कृष्टे न परा० त्वात् | परावर्त्त मानत्वात् | — | — |
| २८ अध्रुवसत्ताकानां | अध्रु०स त्ताकत्वात् | अध्रु० स त्ताकत्वात् | — | — | अध्रु०स त्ताकत्वात् | अध्रुवस त्ताकत्वात् | — | — | अध्रु०स-त्ताकत्वात् | अध्रुवस त्ताकत्वात् | — | — | अध्रु० सत्ता० | अध्रु० सत्ता० | — | — |
| १०५ उक्तशेषाणां | — | भव्यानां क्षयिष्य माणत्वात् | अजघन्य स्थाना प्राप्तस्य | अभ० | स्वक्षय-समये | भव्यानां | — | — | परावर्त्त-मानत्वात् | परावर्त्त-मानत्वात् | — | — | परावर्त्त मानत्वात् | परावर्त्त मानत्वात् | — | — |

अथ स्वामित्वमुच्यते—तच्च द्विधा, उत्कृष्टस्थितिसंक्रमस्वामित्वं, जघन्यस्थितिसंक्रमस्वा मित्वं च। तत्रामरायुषः प्रमत्तसंयतः पूर्वकोट्यायुष्कोऽप्रमत्तभावाभिमुखः स्वायुः शेष तृतीयभागाद्यसमये उत्कृष्टां स्थितिं बद्ध्वा बन्धावलिकायाः परतो देवायुष उत्कृष्टस्थिति संक्रमस्वामी भवति। उत्कृष्टे तिर्यङ्मनुजायुषी तत्प्रायोग्यविशुद्धो मिथ्यादृष्टिः सर्वपर्या प्तिपर्याप्तस्तिर्यङ्मनुजो वा बध्नाति, बन्धावलिकायामतिक्रान्तायां तूत्कृष्टस्थितिसंक्रा करोतीति मिथ्यादृष्टयस्तत्प्रायोग्यविशुद्धा पर्याप्तास्तिर्यङ्मनुजा उत्कृष्टस्थितिसंक्रमस्वामिनः भवन्ति। ननु यदि विशुद्ध्यायुर्द्वयं बध्यते तर्हि मिथ्यादृष्टेः सास्वादनो विशुद्धतर इति कस्मान्नैतदायुर्द्विकमुत्कृष्टस्थितिकं बध्नाति? न च तिर्यङ्मनुजायुषी सास्वादनो न बध्नातीति वाच्यम्, सप्ततिकावृत्तौ "तिर्यगायुषो बन्धो मनुजायुष उदयस्तिर्यङ्मनुजायुषी सती' ए विकल्पो मिथ्यादृष्टेः सास्वादनस्य वा, 'मनुजायुषो बन्धो मनुजायुष उदयो मनुजमनुजायु सती' एषोऽपि विकल्पो मिथ्यादृष्टेः सास्वादनस्य चे'त्यभिधानात्, अत्रोच्यते, सास्वाद गुणे सामान्यतो मनुजतिर्यगायुर्बन्धसंभवेऽपि प्रस्तुतायुर्द्वयमुत्कृष्टस्थितिकमसंख्येयव प्रमाणं सास्वादनो न बध्नाति, तस्य गुणप्रतिपाताभिमुखत्वेन गुणाभिमुखविशुद्धमिथ्याद सकाशाद्विशुद्ध्याधिक्यासिद्धेः। यद्यपि देवनारकाः प्रस्तुतायुर्द्वयं बध्नन्ति, तथापि त्रिपल्योपमलक्षणे उत्कृष्टस्थितिके न बध्नन्ति, तस्मात्तिर्यङ्मनुजायुषोरुत्कृष्टस्थितिबन्धः तिर्यङ्मनुजा एव, पूर्वकोट्यायुषस्तृतीयभागाद्यसमये वर्तमानास्तत्प्रायोग्यविशुद्धाः पर्या मिथ्यादृष्टय उत्कृष्टां स्थितिं बद्ध्वा बन्धावलिकायामतीतायां तिर्यङ्मनुजायुष उत्कृ स्थितिसंक्रमं करोति। अपर्याप्तास्तिर्यङ्मनुजाः प्रस्तुतायुर्द्वयं बध्नन्ति, तथाप्युत्कृष्टां स्थि न बध्नन्ति। अतिविशुद्धमिथ्यादृष्टेः सम्यग्दृष्टेर्वा देवायुर्बन्ध एव स्यादिति पर्याप्तस्वमिथ्या दृष्टित्वतत्प्रायोग्यविशुद्धत्वमिति विशेषणत्रिकं गृहीतम्। नरकायुषोऽपि तत्प्रायोग्यसङ्क्लि उत्कृष्टां स्थितिं बद्ध्वा बन्धावलिकायामतीतायां सत्यामुत्कृष्टस्थितिसंक्रमस्वामी भवा अत्यन्तविशुद्धस्यात्यन्तसङ्क्लिष्टस्य चायुर्बन्धस्यैव निषेधात्, तत्प्रायोग्यसङ्क्लिष्टग्रहणं कृत नरकद्विकवैक्रियसप्तकरूपाणां नवप्रकृतीनां तिर्यङ्मनुजा एव बन्धावलिकायामतिक्रा यामुत्कृष्टस्थितिसंक्रमस्वामिनो भवन्ति। विकलत्रिकसूक्ष्मत्रिकसुरद्विकानां तिर्यङ्म उत्कृष्टां स्थितिं नभन्ति। ततो बन्धावलिकासंक्रमावलिकातिक्रान्तायां सत्यां उत्कृष्ट तिसंक्रमस्वामिनः ते एव भवन्ति। बद्धनरकायुष्को नरकं जिगमिषुर्मिथ्यात्वाभिमु जिननाम्नि उत्कृष्टस्थितिके बध्यमाने तत्कालीनोत्कृष्टसत्ताका अतिक्रान्तबन्धावलि नाम्नः प्रकृतयस्तत्र संक्रामन्ति। संक्रमावलिकायामतीतायां मिथ्यादृष्टिर्बध्यमान नामकर्मणि जिननामकर्म संक्रामति, स एव जिननाम्न उत्कृष्टस्थितिसंक्रमस्वामी स्यते। आहारकसप्तकस्य प्रमत्ताभिमुखोऽप्रमत्त उत्कृष्टां स्थितिं बध्नाति। तत आ काया परत उत्कृष्टसंक्रमस्वामी भवति। स्थावरैकेन्द्रियजात्यातपनामीशानान्ता

उत्कृष्टां स्थितिं बद्ध्वा, ततः पुनर्बन्धावलिकायामतीतायामुत्कृष्टस्थितिसंक्रमस्वामिनो न्ति । ततः परे देवा न स्थावरादीनां संक्रामकाः, एकेन्द्रियप्रायोग्यबन्धाभावात् । मनुजानामेतासां प्रकृतीनां बन्धसंभवेऽपि न ते उत्कृष्टां स्थितिं बध्नन्ति, तस्मादासां मस्वामिनोऽपि ते न भवन्ति । तिर्यग्द्विकौदारिकसप्तकोद्योतसेवार्तसंहनननाम्नां उत्कृष्टां स्थितिं बद्ध्वा, ततो बन्धावलिकायामतिक्रान्तायां सत्यां ... भवन्ति । दर्शनत्रिकसत्कर्मा मिथ्यादृष्टिः सप्ततिसागरोपमकोटाकोटिप्रमाणां मि... स्थितिं बद्ध्वाऽन्तर्मुहूर्तं तत्रैव स्थित्वा ततः सम्यक्त्वं प्रतिपद्यते, ततः सम्यग्दृष्टिः तस्मिन्नेव समयेऽन्तर्मुहूर्तोनां सप्ततिसागरोपमकोटाकोटिप्रमाणां मिथ्यात्वस्थितिं ... मिश्रे च संक्रमयति, ततः संक्रमावलिकायामतिक्रान्तायामुदयावलिकात उपरितनीं मपवर्तनाकरणेन स्वस्थाने संक्रमयति । मिश्रस्थितिं च सम्यक्त्वे संक्रमयत्यपवर्तयति स्वस्थाने इति दर्शनत्रिकस्य सम्यग्दृष्टिरुत्कृष्टस्थितिसंक्रमस्वामी । शेषाणां सर्वासामपि तीनां चतुर्गतिका उत्कृष्टस्थितिसंक्रमस्वामिनो भवन्ति । तत्र बन्धोत्कृष्टानां यामतीतायां, संक्रमोत्कृष्टानां तु बन्धावलिकायां संक्रमावलिकायामतिक्रान्तायां संक्रामति तदुक्तम्–"बंधाओ उक्कस्सो जासिं गंतूण आलिगं परओ। उक्कस्स सामिओ संकमेण तुग तासिं ॥ १ ॥" इत्युक्त उत्कृष्टस्थितिसंक्रमस्वामी ।

अथ जघन्यस्थितिसंक्रमस्वामिन उच्यन्ते–तत्र ज्ञान... यपञ्चकरूपाणां चतुर्दशप्रकृतीनां समयाधिकावलिकाशेषायां स्थितौ वर्तमानः क्षीणकष वीतरागच्छद्मस्थो जघन्यस्थितिसंक्रमस्वामी भवति, निद्राद्विकस्य स एव समयाधिकाव कासंख्येयभागाधिकावलिकाद्विकशेषायां स्थितौ वर्तमानो जघन्यस्थितिसंक्रमस्वामी भव सम्यक्त्वमोहनीयस्य दर्शनमोहनीयक्षपणाय प्रवर्तितकरणो मनुजो जघन्यतोऽपि वर्षा स्योपरि वर्तमानः प्रथमसंहननी जिनकालिको मिथ्यात्वसम्यङ्मिथ्यात्वे क्षपयित्वा सर्वापवर्तनयापवर्त्य क्षपितशेषसम्यक्त्वश्चतुर्गतिको भूत्वा चतसृणां गतीनामन्यतमस्यां ग गत्वा वेदकसम्यक्त्वस्य समयाधिकावलिकायां स्थितौ वर्तमान उदयावलिकात उपरित समयमात्रां स्थितिमपवर्तनाकरणेनाधस्तने स्वोदयावलिकाप्रथमे समयाधिके त्रिभागे प्रक्षि जघन्यस्थितिसंक्रमस्वामी भवति । मिथ्यात्वमिश्रयोर्मनुजोऽविरतो देशविरतः प्रमत्तयति प्रमत्तयतिर्वा स्वक्षपणकाले सर्वापवर्तनयाऽपवर्त्य पल्योपमासंख्येयभागमात्रं चरमखण्डं प्रकृतौ यदा संक्रमयति तदा जघन्यस्थितिसंक्रमस्वामी भवति । संज्वलनलोभस्य समयाधि वलिकाशेषायां स्थितौ वर्तमानः सूक्ष्मसम्परायः उदयावलिकात उपरितनीं समयमात्रां स्थि मपवर्तनाकरणेन समयाधिकं स्वोदयावलिकाप्रथमत्रिभागे यदा प्रक्षिपति तदा स संज्वल लोभस्य जघन्यस्थितिसंक्रमस्वामी भवति । अनन्तानुबन्धीनां चतसृणां गतीनामन्यतम

गतौ वर्तमान सम्यग्दृष्टिश्चरमखण्ड पल्योपमासख्येयभागमात्रं यदा संक्रमयति तदा स जघन्यस्थितिसक्रमस्वामी भवति। सयोगिकेवलिनि या प्रागुक्ताश्चतुर्नवति• प्रकृतयस्तासा सयोगिकेवली अन्तर्मुहूर्तस्थितिकरणरूपे चरमापवर्तने वर्तमानो जघन्यस्थितिसक्रमस्वामी भवति। स्त्यानर्द्धित्रिकनामत्रयोदशकमध्यमकषायाष्टकस्त्रीवेदनपुंसकवेदरूपाणा षड्विंशतिप्रकृतीना पल्योपमासख्येयभागमात्र चरमप्रक्षेप यदा करोति तदाऽनिवृत्तिबादरो जघन्यस्थितिसक्रमस्वामी भवति। हास्यादिषट्कस्यानिवृत्तिबादर क्षपकश्रेण्या वर्तमानोऽपवर्तनाकरणेन सख्येयवर्षप्रमाणा स्थिति करोति, ततस्तस्या स्वनिर्लेपनावसरे सज्वलनक्रोधरूपे परप्रकृतौ प्रक्षिप्यमाणाया जघन्यस्थितिसक्रमो यदा भवति तदा जघन्यस्थितिसक्रमस्वामी भवति। पुवेदसज्वलनक्रोधमानमायाना चरमसमयबद्धालताया बन्धावलिकामतिक्रम्य सक्रमचरमसमये चरमप्रक्षेप प्रक्षिपन्ननिवृत्तिबादरः क्षपकश्रेण्या वर्तमानो जघन्यस्थितिसक्रमस्वामी भवति, केवलं येन वेदेनारूढ क्षपकश्रेणीमारोहति तस्य तद्वेदस्यैव जघन्य स्थितिसक्रमो भवति, न वेदान्तरस्य, यत उदितस्य वेदस्योदयोदीरणापवर्तनादिभिर्बह्वी स्थितिस्त्रुट्यति, बहूना पुद्गलाना च परिशाटन भवति। एव हि यद्यपि नपुसकवेदारूढ स्त्रीवेदनपुसकवेदौ युगपत् क्षपयति, तथापि नपुसकवेदस्यैव जघन्यस्थितिसक्रमो लभ्यते, न स्त्रीवेदस्य, तस्योदयोदीरणयोरभावात्। स्त्रीवेदेनारूढो नपुंसकवेदक्षपणानन्तरमन्तर्मुहूर्तेन कालेन स्त्रीवेद क्षपयति, पुंवेदारूढस्याप्येतावानेव कालो लभ्यते, तथापि तस्य स्त्रीवेदस्योदयोदीरणे न भवत इत्येतावता कालेन स्त्रीवेदारूढस्योदयोदीरणाभ्या बह्वी स्थितिस्त्रुट्यति, तस्मात् स्त्रीवेदारूढ एव स्त्रीवेदस्य जघन्यस्थितिसक्रमस्वामी भवति। तथा पुवेदारूढो हास्यादिषट्कक्षयानन्तर पुवेदं क्षपयति, अन्यथा तु हास्यादिषट्कसहित क्षपयति। उदितस्य च वेदस्योदीरणाया अपि प्रवृत्ते प्रभूता स्थितिस्त्रुट्यतीति पुवेदस्यापि पुवेदारूढस्यैव जघन्यस्थितिसक्रमो भवति, न शेषस्य। आयुषा तु स्वस्वभवव्यवच्छेदसमये समयाधिकावलिकाशेषाया स्थितौ वर्तमान समयमात्रामुपरितनीं स्थितिं स्वस्वोदयावलिकात्रिभागेऽधस्तने समयाधिके प्रक्षिपन् जघन्यसक्रमस्वामी भवतीति, उक्तं जघन्यस्थितिसक्रमस्वामित्वम्, तत्प्रतिपादनेन च प्रतिपादित• स्थितिसक्रम• ॥

उत्कृष्टस्थितिसक्रमस्वामिन•

| प्रकृतीनाम् | स्वामिन | विशेष |
|---|---|---|
| बधोत्कृष्टानां | ४ गतिका | बधावलिकापरत |
| सक्रमोत्कृष्टानां | ,, | बधसक्रमाव० २परत |
| दर्शनमोहाना | सम्यग्दृष्टयः | |

जघ० स्थितिसंक्रमस्वामिनः

| ज्ञाना० ५ नाम्<br>विघ्न ५ नाम्<br>दर्श० ४ नाम् | १२ में<br>समयाधिकावलिकाशेषे | १ समयमात्रा | अपवर्तनया |
|---|---|---|---|
| निद्रा २ | १२ में असं० भा० सह<br>२ आव० शेषे | १ समयमात्रा | अपवर्तनया |
| मिथ्या०<br>मिश्र० | ४-५-६-७ गुणस्था०<br>स्वस्वक्षपणकाले | पल्यासं० भा० | सर्वापवर्तनया |
| सं० लोभ० | सू० समयाधिकाव० शेषे द्द० | १ समयमात्रा | अपवर्तनया |
| अनन्ता० ४ | ४ गतिका सम्यग्दृष्टि | पल्यासं० भा० | उद्वलनया |
| सम्यक्त्व० | ४ गतिकाः कृतकरणाः<br>समयाधिकाव० शेषे | १ समयमात्रा | अपवर्तनया |
| [illegible] १४ नाम् | १२ गु०न्ते | आवलिकोनान्तर्मुहूर्त | चरमापवर्तनया |
| स्त्रीवेदस्य | स्त्रीवेदोदयेन श्रेणिगताः | पल्योपमासंख्येय भा० | |
| पुंवेदस्य | पुंवेदोदयेन ,, | अबाधोन ८ वर्षा | |
| नपुंवेदस्य | नपुंवेदोदयेन ,, | अन्तर्मु० | |
| आयुषि ४ | स्वस्वभवस्थाः | १ समयमात्रा | स्वस्वविच्छेदकाले अपवर्तनया |
| १३ उद्वलनीयानां | ४ गतयः स्वस्वक्षपककाले | पल्यासं० | उद्वलनया |

अथानुभागसंक्रमः प्रतिपाद्यते–तत्रानुभागो रस "ताण रसो अणुभागो" त्ति वचनात् अनुभागोऽनुभावो रस इति पर्यायाः। अनुभागस्य कापायिका अध्यवसाया हेतवः, तदुक्तं "ठिइ अणुभाग कसायओ कुणइ" इति वचनात्। ते च शुभाशुभभेदेन द्विप्रकारा अपि असंख्येयलोकाकाशप्रदेशप्रमाणा भवन्ति। केवलमशुभाध्यवसायेभ्यः शुभा विशेषाधिकाः, तथा हि–यावन्ति सोपानानि आरोहति, तावन्त्येवावतरति, तथापि क्षपकस्यारोहणमेव, न प्रत्यवतरणमतस्तत्सत्कानि विशेषाधिकानि। नन्वनन्तान्यनुभागबन्धाध्यवसायस्थानानि कथं न प्राप्यन्ते, तद्बन्धकर्जीवानामानन्त्यादिति चेत्? न, एकैकस्मिन् स्थितिस्थानेऽसंख्येयलोकाकाशप्रमाणानामनुभागबन्धाध्यवसायस्थानानां प्राप्यमाणत्वात्, स्थितिस्थानानि त्वसंख्येयान्येव भवन्ति, तद्यथा–जघन्यस्थितेरारभ्योत्कृष्टस्थितिं यावत् यावन्तः समयास्तावन्त्येव स्थितिस्थानानि भवन्ति। तदुक्तं कर्मप्रकृतौ–"एक्केक्कम्मि कसाओदयम्मि लोगा असंखिया हुंति। ठिइबन्धट्ठाणेसु वि अज्झवसाणाण ठाणाणि ॥ १ ॥" वृत्ति–"एकैकस्मिन् कपायोदये स्थितिस्थाननिबन्धनभूते नानाजीवापेक्षयाऽनुभागबन्धाध्यवसायस्थानानि कृष्णादिलेश्यापरिणामविशेषरूपाण्यसंख्येयलोकाकाशप्रदेशप्रमाणानि भवन्ति। तथा हि–जघन्यस्थितेरारभ्योत्कृष्टां स्थितिं यावत् यावन्तः समयास्तावन्ति स्थितिस्थानानि। तथा हि–जघन्यस्थितिरेकं

स्थितिस्थान सैव समयोत्तरा द्वितीयम्, द्विसमयोत्तरा तृतीयम्, एव समयवृद्ध्या तावद्वाच्य यावदुत्कृष्टा स्थिति । एव चासख्येयानि स्थितिस्थानानि भवन्ति । तेषु च प्रत्येकमेकैकस्मिन् स्थितिबन्धस्थानेऽध्यवसायस्थानानि तीव्रमन्दादिकषायोदयविशेषरूपाण्यसख्येयलोकाकाशप्रदेशप्रमाणानि भवन्ति । एकैकस्मिंश्च कषायोदये सति असख्येयलोकाकाशप्रदेशप्रमाणान्यनुभागबन्धस्थानानि कृष्णादिलेश्यापरिणामविशेषरूपाणि भवन्ति, "सकषायोदया हि कृष्णादिलेश्यापरिणामविशेषा अनुभागबन्धहेतव" इति वचनादिति मिलितोऽर्थ । यत्तु 'स्थितिपाकविशेषस्तस्य भवति लेश्याविशेषेण' इति वाचकवचन तत्रापि पाकपदमहिम्नाऽनुभाग एव ग्राह्य इति वृद्धवाद इति । स्थावरप्रायोग्यैकैकस्मिन्ननुभागबन्धाध्यवसायस्थानेऽनन्तस्थावरजीवाना, त्रसप्रायोग्ये चैकैकस्मिन्ननुभागबन्धाध्यवसायस्थाने जघन्येनैको द्वौ वोत्कृष्टत आवलिकासख्येयभागे यावन्त समयास्तावत्प्रमाणाना त्रसजीवाना च प्राप्यमाणत्वेन न दोष', तदुक्त—"थावरजीवाणन्ता इक्कि तसजिया असखेज्जा" इति । यद्यपि कर्मवर्गणान्तपातिन कर्मपरमाणवो न पूर्वं तथाविधरसोपेता आसन्, किन्तु प्रायो नीरसा एकस्वरूपाश्च, तथापि काषायिकाध्यवसायेन ग्रहणसमय एव जीव प्रति कर्मपरमाणु सर्वजीवेभ्योऽनन्तगुणान् रसाविभागान् ज्ञानावारकत्वादिविचित्रस्वभावता चोत्पादयति, जीवाना पुद्गलाना चाचिन्त्यशक्तिमत्त्वात्, न चैतदनुपपन्नम्, अत्यन्तनीरसानामपि शुष्कतृणादिपरमाणूना गवादिभिर्गृहीताना क्षीरादिरूपतया सप्तधातुरूपतया च परिणामदर्शनात् । ननु सर्वेषु कर्मपरमाणुषु तुल्यान् रसाविभागान् जनयति, उत विषमान् ? विषमानिति ब्रूम, तथाहि—केषुचित् स्तोकान्, केषुचित् प्रभूतान्, केषुचित्प्रभूततरान्, ताश्च जघन्यतोऽपि सर्वजीवानन्तगुणान्, न सख्येयानसख्येयान् वेति । तत्रापि सर्वेभ्योऽप्येभ्य परमाणुभ्यो ये जघन्यरसान्विता परमाणवस्तेषा समुदाय प्रथमा वर्गणा, ततोऽप्येकेन रसाविभागेनाधिकाना परमाणूना समुदायो द्वितीया वर्गणा, द्वाभ्या स्नेहाविभागाभ्या अधिकाना परमाणूना समुदायस्तृतीया । एवमेकैकस्नेहाविभागैरधिकाना परमाणूना तावत् वर्गणा वाच्या', यावदभव्यानन्तगुणा सिद्धानामनन्तभागकल्पा । प्रथमवर्गणाया परमाणवोऽतिप्रभूता , स्नेहाविभागा अल्पतरा , द्वितीयस्या वर्गणाया प्रथमवर्गणागतपरमाण्वपेक्षया परमाणव स्तोका स्नेहाविभागाश्च प्रभूता , द्वितीयवर्गणागतपरमाण्वपेक्षया तृतीयस्या वर्गणाया परमाणव स्तोका स्नेहाविभागाश्च प्रभूता , तृतीयवर्गणागतपरमाण्वपेक्षया चतुर्थ्या वर्गणाया परमाणव स्तोका स्नेहाविभागाश्च प्रभूता , एव सर्वत्र वाच्यम् । स्वभावतोऽल्पस्नेहा परमाणव प्रभूता , बहुस्नेहा परमाणवोऽल्पाः प्राप्यन्ते । (अत्र स्नेहशब्देन सप्रतिपक्ष स्निग्धस्पर्शो ग्राह्य , तस्यैव पुद्गलाना परस्परबन्धनिमित्तत्वात्, न च स्नेहप्रत्ययस्पर्द्धके स्नेहस्यैव ग्रहणात् रूक्षस्पर्शो न ग्राह्य इति वाच्यम् , रूक्षेण रूक्षस्यापि बन्धसभवात्, स्नेहप्रत्यये कथ रूक्षस्य ग्रहण न कृतमित्यपि न वाच्यम्, स्नेहशब्देनोभयस्यापि ग्रहण कृतमेव, अन्यथा स्नेहप्रत्यये जगद्वर्तिसर्वेषा परमाणूना स्नेहप्रत्ययमेक स्पर्द्धक न स्यात्, तत्र रूक्षपरमाणूनामपि

सम्भवात् । ग्रहणसमयात्पूर्वं बन्धप्रायोग्यस्नेहसत्त्वेऽपि शुभाशुभफलजनकस्नेहाभावात् वर्गणानन्धप्रायोग्यस्नेहस्याविर्भावेऽपि तादृक् स्नेहतिरोभावाच्च कर्मपरमाणवः प्रायो एकस्वभावा इत्युक्तम्, ग्रहणसमये तु पूर्वतोऽनन्तगुणस्नेहाविर्भावः विकाव्यव शुभाशुभफलजननयोग्यता च तेषु भवति ।) अत्र केवलिप्रज्ञाच्छेदनकेन यदा विभाग न प्रयच्छति, तदा योऽशो विश्राम्यति स रसाविभाग उच्यते, ते च भागा एकैकस्मिन् परमाणौ जघन्यतोऽपि सर्वजीवेभ्योऽनन्तगुणा भवन्ति, ७१कृ९० तावत्सख्याका एव, किन्तु ते जघन्यपदभाविरसाविभागेभ्योऽनन्तगुणा द्रष्टव्या इति प्रागुक्तानामभव्येभ्योऽनन्तगुणाना सिद्धानामनन्तभागकल्पाना वर्गणाना समुदाय' स्पर्द्धकम्, तत एकेन रसाविभागेनाधिका॰ कर्मपरमाणवो न प्राप्यन्ते, नापि द्वाभ्या, ना त्रिभिः, किन्त्वनन्तानन्तैरेव सर्वजीवेभ्योऽनन्तगुणै रसाविभागैरधिका' परमाणवः ततस्तेषा समुदायो द्वितीयस्पर्द्धकस्य प्रथमा वर्गणा, तत ५क०१ ६ ०५ गुणसिद्धानन्तभागरूपा वर्गणा वाच्या, तासा समुदायो द्वितीय स्पर्द्धकम्।५४मम०ने द ऽनन्तगुणानि सिद्धेभ्योऽनन्तभागरूपानि स्पर्द्धकानि वाच्यानि । तेषा समुदाय' भागबन्धस्थानम्। प्रथममनुभागबन्धस्थानान्तिमस्पर्द्धकचरमवर्गणाया द्विती णायाश्चान्तर सर्वजीवानन्तगुण वाच्यम्, द्वितीयस्थानमनन्तभागाधिकस्पर्द्धकान्वितं प्रथ स्थानापेक्षया वक्तव्यम्, एव यथोत्तरमनन्तभागवृद्धानि स्थानानि तावद्वाच्यानि यावदङ्गु लासख्येयभागगताकाशप्रदेशप्रमाणानि भवन्ति। एतेषा समुदाय एक कण्डक भवति, अन न्तभागाधिकोत्तरस्थानसमुदायरूपत्वेनानन्तभागोत्तर कण्डकम् । प्रथम ७४५ बन्धस्थानगतस्पर्द्धकापेक्षया यदनन्तरमनुभागबन्धस्थानं ५ भागाधिके भवति । तच्चासख्यभागोत्तराभिधानस्य द्वितीयकण्डकस्य प्रथम स्थानं भवति, तत' पुनरपि प्रथमासख्येयभागवृद्धानुभागस्थानादनन्तरमनुभागस्थान तदनन्तभागाधिकस्पर्द्धक युत, तत पुनरप्यनन्तभागवृद्धम्, एवमेवानन्तभागवृद्धानि कण्डकमात्राणि स्थानानि वाच्यानि, तत पुनरप्यसख्येयभागाधिकस्पर्द्धकैर्वृद्ध द्वितीयमसख्येयभागवृद्ध स्थानं प्राप्यते, ततः पुनरप्यनन्तभागोत्तराणि कण्डकमात्राणि स्थानानि वक्तव्यानि, पुनस्तृतीयमसख्येयभागवृद्धं स्थानं, पुनरप्यनन्तभागोत्तराणि कण्डकमात्राणि स्थानानि, तत पुनरप्यसख्येयभागवृद्धं स्थानम् । एवमनन्तभागवृद्धकण्डकव्यवहितान्यसख्येयभागाधिकानि स्थानानि तावद्वाच्यानि यावत्कण्डकमात्राणि भवन्ति । यद्यप्यसख्येयभागस्थानान्तरितान्यनन्तभागवृद्धानि कण्डकानि भवन्ति, तथापि तानि प्रथमकण्डकगतचरमानुभागबन्धस्थानापेक्षया सर्वाण्यप्यसख्येयभागवृद्धानि, तत प्राक्तनानन्तभागवृद्धस्थानेभ्यस्तु सुतरामसख्येयभागवृद्धानि सर्वाण्यपि प्राप्यन्ते । असख्येयभागवृद्धचरमस्थानात् पुनरप्यनन्तभागवृद्धानि कण्डकमात्राणि स्थानानि वाच्यानि । ततोऽसख्येयभागवृद्धस्थाने प्रथमं सख्येयभागाधिकं स्थानं वाच्यम्, ततः पुनरप्यनन्तभागोत्तराणि कण्डकमात्राणि स्थानानि, पुनरसख्येयभागवृद्धं

स्थान, पुनरनन्तभागोत्तराणि कण्डकमात्राणि स्थानानि, पुनरसख्येयभागवृद्ध स्थान। एव मसख्येयभागवृद्धानि कण्डकमात्राणि स्थानान्यभिधाय पुनरनन्तभागोत्तर कण्डक, ततोऽसख्येयभागवृद्धस्थाने द्वितीय सख्येयभागवृद्ध स्थान वक्तव्यम्। एवं सख्येयभागवृद्धानि स्थानान्यपि कण्डकमात्राणि वाच्यानि। तत पुनरप्यनन्तभागोत्तराणि कण्डकमात्राणि स्थानानि, पुनरसख्येयभागवृद्ध स्थान, पुनरनन्तभागवृद्ध कण्डक, पुनरसख्येयभागवृद्ध स्थानम्, एवमसख्येयभागवृद्धानि कण्डकमात्राण्यभिधायानन्तभागवृद्ध च कण्डकमुक्त्वा सख्येयभागवृद्धिस्थाने प्रथम सख्येयगुणवृद्ध स्थानं वाच्यम्, प्रथमात् सख्येयगुणोत्तरादनु भागबन्धस्थानादधो यावन्ति मूलत आरभ्य प्रागतिक्रान्तानि स्थानानि तावन्त्यतिक्रम्य द्वितीय सख्येयगुणाधिक वक्तव्यम्, एव सख्येयगुणाधिकानि स्थानानि तावद्वाच्यानि यावत् कण्डकस्थानतुल्यानि स्थानानि भवन्ति। तत पुनरपि पूर्वपरिपाट्या सख्येयगुणाधिकस्थानप्रसङ्गेऽसख्येयगुणाधिक स्थान वाच्यम्। पुनरपि मूलत आरभ्य यावन्त्यतिक्रान्तानि सान्ति भूयोऽप्यतिक्रम्य द्वितीयमसख्येयगुणाधिक स्थान वाच्यम्। एवमसख्येयगुणाधिकानि स्थानानि कण्डकप्रमाणानि भवन्ति। तत पुनरप्यसख्येयगुणाधिक स्थानप्रसङ्गेऽनन्तगुणाधिक स्थान वाच्यम्, ततो भूयोऽपि मूलत आरभ्य यावन्ति स्थानानि प्रागतीतानि तावन्त्यभिधाय द्वितीयमनन्तगुणाधिक स्थान वाच्यम्। एवमनन्तगुणाधिकानि स्थानान्यपि कण्डकस्थानतुल्यानि वाच्यानि। ततः पुनरपि पूर्वपरिपाट्या वृद्धिपञ्चकमभिधातव्यम्। ततो भूयोऽप्यनन्तगुणाधिक स्थान न वाच्यम्, षट्स्थानकस्य परिसमाप्तत्वात्। तत पुनरप्यनन्तभागवृद्ध यत्स्थान लभ्यते तत् द्वितीयस्य षट्स्थानकस्य प्रथमम्। एव पूर्वपरिपाट्या द्वितीय षट्स्थान समुत्पद्यते, एव षट्स्थानान्यपि सर्वाण्यसख्येयलोकाकाशप्रदेशप्रमाणानि भवन्ति, तदुक्त—"छट्ठाणगसखया लोगा" इति। विशेषसख्यानिर्धारणार्थं तु कर्मप्रकृतिगता सवृत्तिका गाथा लिख्यते—'सुहुमगणिपवेसणया अगणिकाया य तेसि कायठिई। कमसो असखगुणियाणज्झवसाणाणि अणुभागे ॥ १ ॥" व्याख्या—"सूक्ष्माग्नी सूक्ष्माग्निकाये प्रवेशाम्—उत्पादो येषा ते तथा सूक्ष्माग्नौ प्रविशन्ति इति यावत्, तथाग्निकाया—अग्निकायत्वेनावस्थिता, तथा तेषाम्—अग्निकायाना कायस्थिति:—कायस्थितिकाल, एते क्रमश—क्रमेणासख्येयगुणिता, तथाऽनुभागे—अनुभागविषये, अध्यवसायानि—उपचारादध्यवसायनिर्वर्त्यान्यनुभागबन्धस्थानान्यसख्येयगुणानि। अयमिह भावार्थ —ये एकस्मिन् समये सूक्ष्माग्निकायेषु प्रविशन्ति ते स्तोका, ते चासख्येयलोकाकाशप्रदेशप्रमाणा, तेभ्योऽपि येऽग्निकायत्वेनावस्थिता तेऽसख्येयगुणा, तेभ्योऽप्यग्निकायिकाना कायस्थितिकालोऽसख्येयगुण, तेभ्योऽप्यसख्येयगुणान्यनुभागबन्धस्थानानीति"। ननु कियन्मात्रेणानन्तासख्येयसख्येयतमेन भागेन कियन्मात्रेण चानन्तासख्येयसख्येयगुणेन वृद्धि कर्तव्या इति चेत्? शृणु—सर्वजीवासख्येयलोकाकाशप्रदेशोत्कृष्टसख्येयकै, तथा हि—प्रथमस्यानुभागबन्धस्थानस्य सर्वजीवसख्याप्रमाणेन राशिना भागे हृते सति यल्लभ्यते सोऽत्रानन्तभागो

प्राप्य', तेनाधिकं द्वितीयमनुभागबन्धस्थानम्, तस्यापि सर्वजीवप्रमाणेन राशिना भागे यल्लभ्यते तेनाधिकं तृतीयमनुभागबन्धस्थानम्, एवं यद्यदनुभागबन्धस्थानं यतो यतो नन्तभागवृद्धमुपलभ्यते तत्तत्तस्य तस्य सर्वजीवप्रमाणराशिना भागलब्धेनानन्ततमेना धिकं द्रष्टव्यम्। तथाऽसङ्ख्येयभागाधिकं नाम पाश्चात्यानुभागबन्धस्थानस्यासङ्ख्येयलोकाकाशप्रदेशप्रमाणेन राशिना भागे हृते यल्लभ्यते सोऽसङ्ख्येयतमो भा[illegible]
तथा सङ्ख्येयभागवृद्धं नाम पाश्चात्यस्यानुभागबन्धस्थानस्योत्कृष्टेन सङ्ख्येयेन भागे हृते यल्लभ्यते स सङ्ख्येयतमो भागस्तेनाधिकम्। तथा सङ्ख्येयगुणवृद्धं नाम पाश्चात्यानुभागबन्धस्थाने उत्कृष्टसङ्ख्येयकप्रमाणेन राशिना गुणिते यावल्लभ्यते तावत्प्रमाणम्। तथा[illegible] गुणवृद्धं नाम पाश्चात्येऽनुभागबन्धस्थानेऽसङ्ख्येयलोकाकाशप्रदेशप्रमाणेन राशिना गु[illegible] सति यावान् राशिर्भवति तावत्प्रमाणम्। तथाऽनन्तगुणवृद्धं नाम पाश्चात्ये[illegible] सर्वजीवसङ्ख्याप्रमाणेन राशिना गुणिते सति यावान् राशिर्भवति तावत्प्रमाणम्। ननु यद् दनुभागबन्धस्थानाद्द्वितीयमनुभागबन्धस्थानमनन्तभागवृद्धं तत् किं स्पर्धकापेक्षया, यद्वा पुद्गलापेक्षया, उत रसाविभागापेक्षयेति? अत्र त्रयोऽपि विकल्पा न युक्तिक्षमाः, तथा हि तावत् प्रथमपक्षो यतः प्रथमानुभागबन्धस्थानेऽभव्येभ्योऽनन्तगुणत्वेन सिद्धानामनन्त[illegible] गत्वेन स्पर्धकानां प्राप्यमाणत्वेन सर्वजीवराशिना भागे हृते सति एकमपि न प्राप्यते नापि द्वितीयः, यतो यथा यथाऽनुभागवृद्धिस्तथा तथा पुद्गलाः स्तोकाः स्तोकतरा लभ्यन्ते [illegible] प्रथमादिस्थानात् द्वितीयादिस्थाने परमाणूनां हानिरेव स्यात् नानन्तभागाधिक्यम्, नापि तृतीयः, यतः प्रथमाद्यनुभागबन्धस्थानगतरसाविभागापेक्षया द्वितीयाद्यनुभागबन्धस्थान-गतरसाविभागाः सङ्ख्येयादिगुणतया प्राप्यन्ते, तथा हि–प्रथमानुभागबन्धस्थानगतप्रथम-स्पर्धकस्य प्रथमवर्गणायामनन्ता अपि रसाविभागा असत्कल्पनया सप्त, द्वितीयस्यामष्टौ, तृतीयस्यां नव, चतुर्थ्यां दश, इदमेकं स्पर्धकम्, इतः ऊर्ध्वमेकोत्तरवृद्धिरसाविभागानां वृद्धिर्न प्राप्यते, किन्तु सर्वजीवानन्तगुणरसाविभागैः, ततो द्वितीयस्पर्धकप्रथमवर्गणायां सप्तदश, द्वितीयस्यामष्टादश, तृतीयस्यामेकोनविंशतिः, चतुर्थ्यां विंशतिः, इदं द्वितीयं स्पर्धकम्, ततः पुनरपि सर्वजीवानन्तगुणमन्तरम्, ततस्तृतीयस्पर्धकप्रथमवर्गणायां सप्तविं-शतिः, द्वितीयस्यामष्टाविंशतिः, तृतीयस्यामेकोनत्रिंशत्, चतुर्थ्यां त्रिंशत्, इदं तृतीयं स्पर्ध-कम्, ततः पुनरपि तावत्प्रमाणान्तरम्, ततः चतुर्थस्पर्धकस्य प्रथमवर्गणायां सप्तत्रिंशत्, द्वितीयस्यामष्टात्रिंशत्, तृतीयस्यामेकोनचत्वारिंशत्, चतुर्थ्यां चत्वारिंशत्, इदं चतुर्थं स्प-र्धकम्, इदमसत्कल्पनया प्रथममनुभागबन्धस्थानम्, अत्र च रसाविभागाः सर्वसङ्ख्यया एक-शताधिकानि त्रीणि शतानि, ततः पुनरपि तावत्प्रमाणमन्तरम्, ततः पुनर्द्वितीयानुभा-गप्रथमस्पर्धकप्रथमवर्गणायां सप्तचत्वारिंशत्, द्वितीयस्यामष्टचत्वारिंशत्, तृतीयस्यामेकोन-पञ्चाशत्, चतुर्थ्यां पञ्चाशत्, इदमेकं स्पर्धकम्, ततः पुनरपि तावत्प्रमाणमन्तरम्, ततो द्वितीयानुभागद्वितीयस्पर्धकस्य प्रथमवर्गणायां सप्तपञ्चाशत्, द्वितीयस्यामष्टपञ्चाशत्,

तीयस्यामेकोनषष्टि, चतुर्थ्यां षष्टि, इदं द्वितीय स्पर्द्धकम्, पुनरपि तावत्प्रमाणमन्तरम्, ो द्वितीयानुभागस्य तृतीयस्पर्द्धकप्रथमवर्गणाया सप्तषष्टि, द्वितीयस्यामष्टषष्टि, तृतीय-मेकोनसप्तति, चतुर्थ्यां सप्तति, इद तृतीय स्पर्द्धकम्। तत पुनरपि तावत्प्रमाणमन्तरम्, श्चतुर्थस्पर्द्धकप्रथमवर्गणाया सप्तसप्तति, द्वितीयस्यामष्टसप्तति, तृतीयस्यामेकोनाशीति, तुर्थ्यामशीति, इद चतुर्थं स्पर्द्धकमिति द्वितीयानुभागबन्धस्थानम्, अत्रासत्कल्पनया विभागा सर्वसङ्ख्यया षोडशोत्तरसहस्रम्, तदेव प्रथमस्थानगतरसाविभागापेक्षया तीये स्थाने रसाविभागा सङ्ख्येयगुणतया लभ्यन्ते, उत्तरोत्तरस्थाने तु प्रभूतप्रभूततमा न क्वापि रसाविभागापेक्षया पूर्वपूर्वस्थानापेक्षयोत्तरोत्तरस्थानेष्वनन्तभागाधिक्य ति चेत्? अत्रोच्यते–इय षट्स्थानप्ररूपणा बहु सम्भवाभिप्रायेण सम्भवति, तेन यद्यपि मानन्तगुणानुभागवृद्धात् स्थानात् अर्वाक्तनेषु स्थानेषु सर्वजीवप्रमाणेन राशिना भाग ो न सम्भवति, तथाप्युपरितनेषु स्थानेषु अन्येष्वपि द्वितीयादिषट्स्थानेषु सर्वेष्वपि च सश्रेण्यादिगतेषु स्थानेषु सम्भवतीति न विरोध। यद्यपि च पूर्वपूर्वस्थानापेक्षयोत्तरोत्तर नेषु परमाणव किञ्चिद्धीनहीनतरा प्राप्यन्ते तथापि तेषु स्तोकस्तोकतरै परमाणुभिव ाना निष्पत्तेरुच्चस्वरूप स्पर्द्धकबाहुल्य न विरुध्यते। अपि च प्रथमानन्तगुणानुभाग-स्थानात् पूर्वपूर्वस्थानेभ्य उत्तरोत्तरस्थानानामनन्तभागाधिक्यमतिस्तोकतरमिति।

अथ च रस शुभप्रकृतीना क्षीरखण्डादिरसोपमोऽशुभप्रकृतीना निम्बघोषातक्यादिरसो-। तत्र स्वाभाविक एकस्थानक, द्वयो कर्षयोरावर्तितयोर्य एक कर्षोऽवतिष्ठते तदु-द्विस्थानक। त्रयाणा कर्षाणामावर्तिताना य एक कर्षोऽवशिष्यते तदुपमस्त्रिस्था-। चतुर्णां कर्षाणामावर्तने कृते सत्युद्धरितैककर्षोपमश्चतु स्थानक। अत्रैकस्थानादिरसा त्तरमनन्तगुणा द्रष्टव्या। बन्धमाश्रित्य मतिश्रुतावधिमन पर्यायज्ञानावरण चक्षुरचक्षु-धिदर्शनावरणानि पुवेदश्चत्वार सञ्ज्वलना पञ्चविधान्तरायमिति सप्तदशप्रकृतिव्यति न शुभा अशुभा वा द्विस्थानकरसा त्रिस्थानकरसाश्चतु स्थानकरसाश्च प्राप्यन्ते, न तु ाचनाप्येकस्थानकरसा। उक्तसप्तदशाना तु प्रकृतीना बन्धमाश्रित्यैकस्थानकोऽपि ऽनिवृत्तिसङ्ख्येयभागेषु गतेषु सत्सु परत प्राप्यते, अशुभानामत्यन्तविशुद्धाध्यवसाय-नैकस्थानकस्य रसस्य बन्धात्, पूर्वं तु नैकस्थानकरसबन्ध किन्तु द्विस्थानकादिरस ाति। ननु हास्यादीना स्वबन्धचरमद्विचरमादिसमयेषु वर्तमानस्यैकस्थानिकरसबन्ध न सम्भवतीति चेत्? न, एकस्थानिकरसबन्धप्रायोग्यपरमप्रकर्षप्राप्तविशुद्धेरभावात्, यदा त् बन्धप्रायोग्या परमप्रकर्षप्राप्ता शुद्धिर्नवमगुणस्थानसङ्ख्येयेभ्यो भागेभ्य परतो जाय-तदा बन्धमेव ता नायान्तीति कुत एकस्थानिकरसबन्धस्य सम्भव? ननु यथा मतिज्ञा-रणादीनामनिवृत्तियादराद्धाया सङ्ख्येयेषु भागेषु गतेषु परतोऽतिविशुद्धत्वेनैकस्थानि-सबन्ध, तथा क्षपकश्रेण्या सूक्ष्मसम्परायस्य चरमद्विचरमादिसमयेषु वर्तमानस्य सम्भवत् वस्य केवलद्विकावरणस्य कथमेकस्थानिकरसबन्धो न भवति, तदानीमतिविशुद्धतया-

दिति चेत्? न, सर्वघातित्वेन केवलद्विकावरणस्य जघन्यपदेऽपि ... सम्भवात्। ननु यथाऽशुभसप्तदशप्रकृतीना परमविशुद्धौ सत्यामेकस्थानिकरसबन्ध ... तद्वदतिसक्लिष्टे मिथ्यादृष्टौ शुभप्रकृतीनामेकस्थानिकरसबन्ध. कथं न भवतीति चेत्, मनाग्विशुद्ध्यमाने सत्येव तद्बन्धसभवेनातिसक्लिष्टे मिथ्यादृष्टौ तद्बन्धासभवात्, ... च परमसक्लिष्टे मिथ्यादृष्टौ शुभप्रकृतीनामेकस्थानिकरसबन्धस्य सभावनाया एव ... प्रकाश । नन्वतिसक्लिष्टे मिथ्यादृष्टौ नरकप्रायोग्यवैक्रियतैजसादिप्रकृतीना बन्धस कथमेकस्थानिकरसबन्धो न सभवतीति चेत्? सत्यं, पर तासामपि ... जघन्यतोऽपि द्विस्थानिकरसबन्धस्यैव सभवात्। ननु यैरध्यवसायै. शुभप्रकृत. ... स्थितिर्भवति तैरेवाध्यवसायै शुभप्रकृतीनामेकस्थानिकरसबन्ध. कथं न सभवतीति शृणु–इह हि प्रथमस्थितेरारभ्य समयवृद्ध्या असख्येया' स्थितिविशेषा भवन्ति, ... च स्थितौ अनन्तरपर्द्धकात्मका असख्येया रसस्पर्द्धकसघातविशेषा भवन्ति । तत ... स्थितौ बध्यमानाया प्रतिस्थितिविशेषमसख्येया ये रसस्पर्द्धकसङ्घातविशेषास्ते सर्वे द्वि... निकरसबन्धस्यैव घटन्ते, नैकस्थानिकस्येति न शुभप्रकृतीनामेकस्थानिकरसबन्ध, ... "उक्कोसठ्ठिई अज्झवसाणेहिं एगट्ठाणिओ होही। सुभिटाण तं न ज ठ्ठिइअसखगुणिया उ भागा ॥ १ ॥" इति । अत्रानुभागबन्धस्यानुभागसङ्क्रमे सोपयोगित्वेन ... स्वरूपमुप... अनुभागसङ्क्रमे सप्तानुयोगद्वाराणि, तद्यथा–भेद., विशेषलक्षण, स्पर्द्धकप्ररूपणा, ... भागसक्रमपरिमाणम्, जघन्यानुभागसक्रमपरिमाणम्, साद्यादिप्ररूपणा, स्वामित्वं चे... तत्र भेद द्विप्रकार, तद्यथा–मूलप्रकृत्यनुभागसङ्क्रम., उत्तरप्रकृत्यनुभागसङ्क्रमश्च । मू... त्यनुभागसक्रमोऽष्टधा, तद्यथा–ज्ञानावरणीयस्य, दर्शनावरणीयस्य, वेदनीयस्य, ... मोहनीयस्य, नामकर्मण, गोत्रस्य, अन्तरायस्य चेति । उत्तर ... तथा, तद्यथा–मतिज्ञानावरणीयस्य, श्रुतज्ञानावरणीयस्य, यावद्वीर्यान्तरायस्येति, कृतं निरूपणम्। विशेषलक्षणमुच्यते–स्थितिसक्रमवत् रससक्रमोऽपि त्रिविध, ... ङ्क्रम, अपवर्तनासङ्क्रम, प्रकृत्यन्तरनयनलक्षणसङ्क्रमश्चेति । तत्र स्तोकस्य रसस्य प्रभूत... द्वर्तना, प्रभूतस्य रसस्याल्पीकरणमपवर्तना, विवक्षिताया. प्रकृते समाकृष्य प्रकृत्यन्तरे ... निवेशन प्रकृत्यन्तरनयनलक्षणसक्रम, अत्र केवलस्य रसस्यान्यत्र नेतुमशक्यत्वेन ... परमाणूनामवसेयमिति निरूपित विशेषलक्षणम्। अथ स्पर्द्धकप्ररूपणा प्ररूप्यते–तत्र ... नि त्रिविधानि, तद्यथा–सर्वघातीनि, देशघातीनि, अघातीनि चेति । तत्र स्वविषय ... नादिगुणं सर्वं घातयन्तीत्येवंशीलानि यानि रसस्पर्द्धकानि तानि सर्वघातीनि ... गुणस्य देशं मतिज्ञानादिलक्षणं घातयन्तीत्येवंशीलानि यानि रसस्पर्द्धकानि तानि देशघातीनि । यानि रसस्पर्द्धकानि न किमपि घातयन्ति तान्यघातीनि, केवलं सर्वघातिरसस्पर्द्धकसम्बन्धात् तान्यपि सर्वघातीनि भवन्ति, यथेह लोकेऽपि स्वयमचौराणामपि ... चौरता । सर्वघातिरसस्पर्द्धकसम्पर्कात् प्रकृतयोऽपि सर्वघातिन्य उच्यन्ते, ताश्च केवलज्ञाना-

वरण, केवलदर्शनावरणम्, आद्यद्वादशकषायाः मिथ्यात्व, निद्रापञ्चेति विंशति । एता हि प्रकृतयो यथायोग स्वघात्य गुण ज्ञान, दर्शन, चारित्र, सम्यक्त्व, दर्शनलब्धि वा सर्वात्मना घातयन्तीति । यद्यपि केवलज्ञानावरणीय कर्म ज्ञानलक्षण गुण सर्वात्मना हन्तुं प्रवर्तते तथापि न तत्तेन समूल हन्तु शक्यते तथास्वाभाव्यात्, यथा महीयसापि घनपटलेन रविचन्द्रकिरणावरणप्रवृत्तेनापि न तत्प्रभा समूल हन्तुं शक्यते, अन्यथानुभूयमानदिन रजनीविभागाभावापत्ते, एव केवलदर्शनावरणीयस्यापि वाच्यम् । यद्यपि निद्रापञ्च कमप्राप्तलब्धे प्रतिबन्धकत्वेन न प्रवर्तते, तथापि प्राप्तलब्धे समूलनाशकत्वेन प्रवर्तनात् सर्वघातित्वम्, तदुक्त गन्धहस्तिपादै'—"निद्रादय समधिगताया एव दर्शनलब्धेरुपघाते वर्तन्ते दर्शनावरणचतुष्टय तूद्गमोच्छेदित्वात्समूलघात हन्ति दर्शनलब्धिम्" । एवमेव न्याया चार्या अपि—"निद्रादयश्च पञ्च प्रकृतयो यद्यपि केवलदर्शनावरणावृत्तकेवलदर्शनगतप्रभामात्र दर्शनैकदेशमुपघ्नन्ति, तथापि ताश्चक्षुर्दर्शनावरणादिकर्मक्षयोपशमसमुत्था दर्शनलब्धि समूलकाष कषन्तीति सर्वघातिन्य" इति । एव मोहनीयेऽपि सर्वघातित्व परिभावनीयम् । देशघातिरसस्पर्द्धकसम्पर्केण ज्ञानादिगुणैकदेशविघातित्वात् प्रकृतयोऽपि देशघातिन्य उच्यन्ते, ताश्चेमा—केवलज्ञानावरणवर्जज्ञानावरणचतुष्ककेवलदर्शनावरणवर्जदर्शनावरणत्रिकं नवनोकषायसज्वलनचतुष्कान्तरायपञ्चकमिति पञ्चविंशति । केवलज्ञानावरणीयेनावृत्तेऽपि सर्वात्मना केवलज्ञाने य. कोऽपि तद्गतमन्दविशिष्टतरप्रकाशरूपो ज्ञानैकदेशो मति ज्ञानादिव्यपदिष्ट यथायोग मतिश्रुतावधिमन पर्यायज्ञानावरणानि घ्नन्ति तानि देश घातीनि । एव केवलदर्शनावरणावृत्तेऽपि सर्वात्मना केवलदर्शने या तद्गता मन्दमन्दतमविशिष्टादिरूपा प्रभा चक्षुर्दर्शनादिसज्ञा ता यथायोग चक्षुरचक्षुरवधिदर्शनावरणान्याघ्नन्ति, ततस्तान्यपि दर्शनैकदेशघातित्वाद्देशघातीनि । नवनोकषाया सज्वलनचतुष्कमाद्यद्वादशकषायकमक्षयोपशमसमुत्था चारित्रलब्धि देशतो घ्नन्ति, तेषामतीचारमात्रसम्पादनपरत्वात्, तदुक्त—"सव्वे वि य अइआरा सजलणाण तु उदयओ हुन्ति । मूलच्छेज्ज पुण होइ बारसह्ह कसायाण ॥ १ ॥" तथा—"बाइक्खओवसमेण सम्मचरित्ताइ जाइ जीवस्स । ताण हणति देस सजलणा नोकसाया य ॥ १ ॥" ततस्तेऽपि देशघातिन । नन्वत्र गाथाया चारित्रैकदेशघातित्वेन सज्वलननोकषायाणा देशघातित्वमुक्त, तर्हि अप्रत्याख्यानानामपि चारित्रैकदेशरूपदेशविरतिप्रतिबन्धकत्वेन कथ न देशघातित्वमिति चेत्? उच्यते, सर्वघातिभिन्नत्वे सति यत् घातित्व तदेव देशघातित्वमिति लक्षणस्य वाच्यत्वेन न दोष । यद्वा चारित्रापेक्षया देशघातित्व चारित्रगतापकर्षजनकत्वमेव, तच्च नाप्रत्याख्यानानामित्य दोष । यद्वा यदुदये देशतोऽपि स्वावार्यगुणो नाविर्भवति किन्त्वनुदये एवाविर्भवति सा सर्वघातिनी इत्यपि सभवल्लक्षणेनाप्रत्याख्यानकषाया सर्वघातिनः । तथा ग्रहणधारणादियोग्यमपि वस्तु जीवो न ददाति, न लभते, न भुङ्क्ते, नोपभुङ्क्ते, न करोति वा तद्दानान्तरायादिविषयश्च सर्वद्रव्याणामनन्ततमो भागस्ततस्तथारूपसर्वद्रव्यैकदेशविषयदानादिविघातकारित्वा

देशघातिदानान्तरायादीनीति । नामगोत्रवेदनीयायुष्कर्मणां प्रकृतयस्तु [illegible] [illegible]वेन
किमपि घ्नन्तीति ता अघातिन्यो द्रष्टव्या । सर्वघातिनीनां हि [illegible]
घृतवदतिस्निग्धो द्राक्षावत्तनुप्रदेशोपचितः स्फटिकाभ्रवच्चातीव निर्मलः [illegible]
घातित्वेन सर्वघाती भवति । देशघातिनीना तु रस [illegible]
च्छिद्रशतसङ्कुल., कश्चित्कम्बलवन्मध्यमविवरशतसङ्कुल', कोऽपि [illegible]
यरसघृत्त. अल्पस्नेहो निर्मलश्च स्वविषयैकदेशघातित्वाद्देशघाती भवति । [illegible]
च्चोभयविलक्षणत्वादघाती रसः, केवलमघातिनीनामपि प्रकृतीना [illegible]
सविपाकोपदर्शकत्व भवति, स्वयमचौराणामपि चौरसम्पर्कत इव चौरत्वमिति ।

अथ रसकारणत' स्थानसञ्ज्ञापि वेदितव्या । [illegible]
चतु'स्थानसञ्ज्ञा, शेषाणा तु द्वित्रिचतु स्थानसञ्ज्ञा, सा प्रागभिहितैव । सम्यक्त्वमिश्रयोः
नसञ्ज्ञा घातिसञ्ज्ञा च प्राग् न प्रतिपादिता । तयोः सङ्क्रममधिकृत्य विशेषोपदर्शन च [illegible]
इह दर्शनमोहनीयसत्कर्माश्रित्य रसस्पर्द्धकानि द्विविधानि भवन्ति, तद्यथा–देशघातीनि
घातीनि च । तत्र यानि देशघातीनि रसस्पर्द्धकानि तानि सम्यक्त्वमोहनीयस्यैव भवन्ति,
मिश्रमिथ्यात्वयो , तयोः सर्वघातित्वात्, तानि [illegible]
तानि च भवन्ति । यत्र देशघातिरसस्पर्द्धकानि परिनिष्ठितानि ततस्तदुपरितनानि [illegible]
सर्वघातीनि, तानि मिश्रमिथ्यात्वयोर्भवन्ति । ततो यत्र मिश्रस्य [illegible]
रसस्पर्द्धकानि परिनिष्ठितानि ततस्तदुपरितनानि द्विस्थानिकरसोपेतानि, [illegible]
तानि, चतु.स्थानिकरसोपेतानि च सर्वाण्यपि रसस्पर्द्धकानि मिथ्यात्वस्यैव भवन्ति ।

दर्शनमोहनीयस्य स्पर्धकानुक्रमस्य स्थापना ।

सम्यक्त्वस्यानुभागस्पर्ध० | मिश्रस्यानुभागस्पर्धकानि | मिथ्यात्वस्यानुभागस्पर्धकानि

|OOOOO| |OOOO|OOOOOOOOO|OOOO| |OOOOO| |OOOOO|

१ स्थानकरसः　　२ स्थानकरस　　३ स्थानकरस　　४ स्थानकरसः

सङ्क्रममाश्रित्य मिश्रस्य द्विस्थानिकरसस्पर्द्धकान्येव सङ्क्रामन्ति, शेषाणामभावात्
सम्यक्त्वस्यैकस्थानिकरसोपेतानि द्विस्थानिकरसोपेतानि च सङ्क्रामन्ति, एतेषामेव सद्भावात्
आतपतिर्यङ्मनुजायुषा तु "दुतिचउट्ठाणाउ सेसाउ" इति वचनप्रामाण्यात् द्वित्रिचतु स्था
निकरसस्पर्द्धकाना सद्भावेऽपि तथास्वाभाव्यात् द्विस्थानिकरसस्पर्द्धकान्येव सङ्क्रमयन्ति ।
त्रिस्थानिकचतुःस्थानिकरसस्पर्द्धकाना त्रिविधोऽपि सङ्क्रमो न भवति । एतासा सर्वघाति-
प्रकृत्यन्तररससम्पर्कात् रस' सर्वघाती, न त्वघाती देशघाती वा । मत्यादिज्ञानाव-
रणचतुष्कचक्षुरादिदर्शनावरणत्रिकपुंवेदसञ्ज्वलनचतुष्कान्तरायपञ्चकमिति सप्तदशप्रकृतीनां
बन्धमाश्रित्यैकस्थानिकरसस्पर्द्धकानि, द्विस्थानिकरसस्पर्द्धकानि, त्रिस्थानिकरसस्पर्द्धकानि
चतु.स्थानिकरसस्पर्द्धकानि च भवन्ति । पुंवेदसञ्ज्वलनचतुष्कवर्जाना द्वादशप्रकृतीना
सद्भावमाश्रित्यैकस्थानिकरसो न भवति, पुंवेदसञ्ज्वलनचतुष्करूपाणा त्वेकस्थानिकरसोऽपि

भवति, सङ्क्रममाश्रित्य द्वादशानामेकस्थानकरसस्य सङ्क्रमो न भवति, पञ्चाना तु एकस्थानिकरसोऽपि सक्रामति । शेषाणा सर्वासा प्रकृतीना तु द्विस्थानिकरसस्पर्द्धकानि त्रिस्थानिकरसस्पर्द्धकानि चतु स्थानिकरसस्पर्द्धकानि च सद्भावमाश्रित्य भवन्ति, सक्रममाश्रित्य च सक्रामन्ति, नैकस्थानिकानि, तदुक्त कर्मप्रकृतिचूर्णौ "अण्ण च सव्वकम्माण सतकम्म पडुच्च दुट्ठाणिगतिट्ठाणिगचउट्ठाणिगाणि फड्डगाणि, सम्मामिच्छत्तस्स दुट्ठाणिगा चेव फड्डगा, सम्मत्तस्स एगट्ठाणिय दुट्ठाणियाणि, पुरिसवेदसजलणाण एगट्ठाणादि चउव्विह फड्डगा फड्डगपरूवणा कया" इति । यत्तु मतिश्रुतावधिज्ञानावरणचक्षुरचक्षुरवधिदर्शनावरणस्त्रीवेदनपुसकवेदान्तरायपञ्चकरूपाणा त्रयोदशप्रकृतीना स्थानमधिकृत्य द्विस्थानमनुभागसत्कर्मोक्त तत्सक्रमकाले सक्रमविषयकसत्तामाश्रित्यावसेयम्, अन्यथाऽनुभागसत्कर्माधिकारे एकस्थानिकस्यानुभागसत्कर्मण उक्तत्वेन विरोधापत्ते तदुक्त—"सकमसयमणुभागे णवरि जहन्न तु देसघाईण । छन्नोकसायवज्जाण एगट्ठाणमि देसहर ॥ १ ॥ मणनाणे दुट्ठाण देसहर" व्याख्या—"अनुभागसक्रमेण तुल्यमनुभागसत्कर्म वाच्यम्, यथानुभागसक्रमे स्थानप्रत्ययविपाकशुभाशुभत्वसाधनादिस्वामित्वान्युक्तानि तथैवात्राप्यनुभागसत्कर्मणि वाच्यानीति भाव , नवरमय विशेष —यदुत देशघातिनीना हास्यादिषट्कवर्जिताना मतिश्रुतावधिज्ञानावरणचक्षुरचक्षुरवधिदर्शनावरणसज्वलनचतुष्टयवेदत्रयान्तरायपञ्चकरूपाणामष्टादशप्रकृतीना जघन्यानुभागसत्कर्म स्थानमधिकृत्यैकस्थानीयम्, घातिसज्ञामधिकृत्य देशहर देशघाति, मन पर्यायज्ञानावरणे तु जघन्यानुभागसत्कर्मस्थानचिन्ताया द्विस्थानम्, घातिसज्ञाविचारे च देशघाति ज्ञेयम्" इति । ननु त्रयोदशप्रकृतीना जघन्यसक्रमकाले सर्वघातित्व द्विस्थानिकत्व चोक्त, "एगट्ठाणमि देसहर" इत्यनेन तु जघन्यसत्कर्मणि प्रागुक्ताना त्रयोदशप्रकृतीना देशघातित्वमेकस्थानिकत्व चेति कथ न विरोध इति चेत् ? भिन्नकालत्वेन न दोष , भिन्नकालत्व च क्षीणकषायस्य समयाधिकावलिकाशेषाया स्थितौ वर्तमानस्य वेदद्विकवर्जैकादशप्रकृतीना सक्रमो भवति, जघन्यानुभागसत्कर्म तु स्वान्तिमसमये, वेदद्विकस्य च जघन्यस्थितिसक्रमे जघन्यानुभागसक्रम , अनुभागसत्कर्म तु स्वक्षपणान्तिमसमये इति । ननु मतिज्ञानावरणश्रुतज्ञानावरणचक्षुरचक्षुर्दर्शनावरणानामुत्कृष्टाया श्रुतलब्धौ वर्तमानस्य श्रुतकेवलिनः जघन्यानुभागसत्कर्म प्राप्यते, अवधिद्विकावरणस्य च परमावधे जघन्यानुभागसत्कर्म प्राप्यते, तयो कथ नैकस्थानिकरससक्रमस्य सभव ? न च वाच्य तयो एतासा प्रकृतीना जघन्यानुभागसक्रमो न भवतीति, एतासामजघन्यसक्रमस्य सादित्वप्राप्तेः, किञ्च जघन्यतोऽपि एकस्थानिकस्य बन्ध कथ च द्विस्थानिकरसस्य सत्तेति चेत् ? सत्यम्, श्रुतकेवलिपरमावधिकौ श्रेणिबहिर्वर्तिनावत्र न गृहीतौ किन्तु क्षपकश्रेण्यारूढौ क्षीणमोहस्थानस्थौ, तेन न कोऽपि दोष इति कृता स्पर्द्धकप्ररूपणा ।

अथोत्कृष्टरससङ्क्रमपरिमाणमुच्यते—प्रमाण द्विविध घातित्वप्रमाण स्थानप्रमाण च । तत्रोत्कृष्टानुभागसक्रमे सम्यक्त्वमोहनीय विहाय सर्वासा प्रकृतीना सर्वघाती एव रस सक्रामति, सम्यक्त्वस्य तु देशघातीनि रसस्पर्द्धकान्येव सक्रामन्ति । स्थानप्रमाणमाश्रित्य

तु सम्यक्त्वस्य सर्वोत्कृष्टं द्विस्थानकरसोपेतं स्पर्द्धकपटलं यदा संक्रामति तदा त्कृष्टानुभागसंक्रमो भवति, त्रिस्थानकरसस्पर्द्धकानि चतुःस्थानकरसस्पर्द्धकानि च भवन्तीत्युक्तमेव, मिश्रस्य सर्वोत्कृष्टं द्विस्थानिकरसोपेतं स्पर्द्धकं यदा संक्रामति त्कृष्टानुभागसंक्रमः, शेषस्याभावात् । तिर्यङ्मनुजायुरातपानामपि सर्वोत्कृष्टं द्विस्थानिकरसोपेतं स्पर्द्धकपटलं यदा संक्रामति, तदोत्कृष्टानुभागसंक्रमो भवति, ... निकचतुःस्थानिकस्पर्द्धकानां बन्धमाश्रित्य सद्भावमाश्रित्य च संभवेऽपि तथास्वाभाव्यात् ... इति । शेषाणां सर्वासां प्रकृतीनां सर्वोत्कृष्टः चतुःस्थानको रसो यदा संक्रामति तदा तासामुत्कृष्टानुभागसंक्रमो भवति। उक्तमुत्कृष्टानुभागसंक्रमपरिमाणम् ॥

उत्कृष्टानुभागसंक्रमप्रमाणम्

| प्रकृतीनां | स्थानप्रमाण | घातिप्रमाण |
|---|---|---|
| सम्यक्त्वस्य | २ | देशघाति |
| मिश्रस्य नरायुस्तिर्यगायुरातपानां च | २ | सर्वघाति |
| उक्तशेषाणां | ४ | ,, |

अधुना जघन्यानुभागसंक्रमपरिमाणमुच्यते—तत्र घातित्वमाश्रित्य सम्यक्त्वपुंवेदसंज्वलनानां जघन्यरससंक्रमो देशघाती भवति, शेषाणां सर्वासामपि प्रकृतीनां ... सर्वघातिरस एव संक्रामति । स्थानप्रमाणमाश्रित्य सम्यक्त्वस्य सर्वविशुद्ध ... नि यदा संक्रामति तदा स तस्य जघन्यानुभागसंक्रमो भवति । पुरुषवेदसंज्वलनानां च णकाले यानि समयोनावलिकाद्विकबद्धान्येकस्थानिकरसोपेतानि सर्वजघन्यस्पर्द्धकानि यदा संक्रामन्ति तदा स तेषां जघन्यानुभागसंक्रमो भवति । शेषाणां तु सर्वासां स्वप्रायोग्यसर्वजघन्यानि द्विस्थानिकरसोपेतानि यदा संक्रामन्ति तदा तासां ... भवति । ननु ... मिति द्वादशप्रकृतीनां बन्धे एकस्थानिकरसस्यापि संभवेन संक्रमे कथमेकस्थानिकरसो प्राप्यते इति चेत्? सत्यम्, परं क्षयकाले पूर्वबद्धद्विस्थानिकरसस्यापि ... कस्थानिकस्य चासंक्रमेण संक्रमविषयतया एकस्थानिकरसस्यासंभवः । उक्तं जघन्यानुभागसंक्रमपरिमाणम् ॥

जघन्यानुभागसंक्रमप्रमाणम्

| प्रकृतीनां | स्थानप्रमाण | घातिप्रमाण |
|---|---|---|
| सम्य० पु० संज्व० ४ | १ | देशघाति |
| उक्तशेषाणां | २ | सर्वघाति |

अथ साद्यनादिप्ररूपणा क्रियते—सा द्विधा, मूलप्रकृतिविषया उत्तरप्रकृतिविषया च । तत्र ज्ञानावरणदर्शनावरणान्तरायाणामजघन्यानुभागसंक्रमस्त्रिविधः, तद्यथा—अनादिर्ध्रुवो ध्रुवश्चेति । तथाहि—एतासां जघन्यानुभागसंक्रमः क्षीणमोहस्य समयाधिकावलिकाशेषायां स्थितौ प्राप्यते, स च सादिरध्रुवश्च, तदन्यः सर्वोऽप्यजघन्यः, स चानादिः, ध्रुवाध्रुवौ अभव्यभव्यापेक्षया । मोहनीयस्याजघन्यानुभागसंक्रमश्चतुर्विधः, तद्यथा—सादिरना-

दिर्ध्रुवोऽध्रुवश्च । तथाहि–मोहनीयस्य जघन्यानुभागसङ्क्रमं सूक्ष्मसम्परायस्य क्षपकस्य समयाधिकावलिकाशेषाया स्थितौ भवति, स च सादिरध्रुवश्च, तदन्यः सर्वोऽप्यजघन्य, स च क्षायिकसम्यग्दृष्टेरुपशमश्रेण्या वर्तमानस्योपशान्तमोहे न भवति, तत प्रतिपाते च भवति, ततोऽसौ सादिः तत्स्थानमप्राप्तस्य त्वनादि ध्रुवाध्रुवौ अभव्यभव्यापेक्षया । आयुषोऽनुत्कृष्टोऽनुभागसङ्क्रमश्चतुर्विधः, तद्यथा–सादिरनादिर्ध्रुवोऽध्रुवश्च, तथाहि–अप्रमत्ते देवायुष उत्कृष्टानुभागं बद्ध्वा बन्धावलिकायामतीतायां सङ्क्रमयितुमारभमाणस्तावत्कालं सङ्क्रमयति यावद्देवभवे स्थितस्य देवायुषस्त्रयस्त्रिंशत्सागरोपमाण्यतिक्रामन्ति, आवलिकामात्रस्थितिश्चावतिष्ठते, ततोऽन्यः सर्वोऽप्यनुभागसङ्क्रमोऽनुत्कृष्टः, स च सादिः, तत्स्थानमप्राप्तस्यानादि, ध्रुवाध्रुवौ पूर्ववदिति । वेदनीयगोत्रनाम्नामनुत्कृष्टानुभागसङ्क्रमस्त्रिविध, तद्यथा–अनादि, अध्रुव, ध्रुवश्च, तथाहि–क्षपकश्रेण्या वर्तमानः सूक्ष्मसम्परायचरमसमये एतेषां कर्मणामुत्कृष्टानुभागं बद्ध्वा बन्धावलिकायामतीतायां सत्या तावत्सङ्क्रामति यावत्सयोगिगुणस्थानचरमसमय, स च सादिरध्रुवश्च, ततोऽन्य सर्वोऽप्यनुत्कृष्टः, स चादेरभावादनादि ध्रुवाध्रुवौ पूर्ववत् । चतुर्णां घातिकर्मणामुत्कृष्टानुत्कृष्टजघन्यविकल्पा सादयोऽध्रुवाश्च । तत्र जघन्यानुभागसङ्क्रमोऽजघन्यानुभागसङ्क्रमप्रसङ्गे भावित एव । उत्कृष्टानुभागसङ्क्रमो मिथ्यादृष्टेः प्रतिनियतकाल एव भवति, अन्यदा तु मिथ्यादृष्टेरप्यनुत्कृष्टानुभागसङ्क्रमो भवतीत्येतौ साद्यध्रुवौ । चतुर्णामघातिकर्मणामनुत्कृष्टानुभागसङ्क्रम उक्त । जघन्याजघन्योत्कृष्टानुभागसङ्क्रमास्तु सादयोऽध्रुवाश्च । तत्रोत्कृष्टानुभागसङ्क्रम सादिरध्रुवश्च प्रागेव भावितः । जघन्यानुभागसङ्क्रमस्तु सूक्ष्मस्यापर्याप्तस्य हतप्रभूतानुभागसत्कर्मण एकेन्द्रियस्य भवति, नान्यस्य, प्रभूतानुभागसत्कर्मघाताभावे तु तस्याप्यजघन्य किं पुनरन्यस्येत्येतौ द्वावपि साद्यध्रुवौ । कृता मूलप्रकृतीनां साद्यनादिप्ररूपणा ।

अथोत्तरप्रकृतीनां सैव क्रियते–अनन्तानुबन्धिचतुष्कसञ्ज्वलनचतुष्कनोकषायनवकलक्षणानां सप्तदशप्रकृतीनामजघन्यानुभागसङ्क्रमश्चतुर्विध , तद्यथा–सादिरनादिर्ध्रुवोऽध्रुवश्च । तत्रानन्तानुबन्धिनामुद्वलनासङ्क्रमेणोद्वल्य भूयोऽपि मिथ्यात्वप्रत्ययेन बद्धानां बद्धावलिकायामतीतायां सत्यां द्वितीयावलिकाद्यसमये जघन्यानुभागसङ्क्रमो लभ्यते, शेषाणां त्रयोदशप्रकृतीनां तु स्वस्वक्षयपर्यवसाने जघन्यस्थितिसङ्क्रमकाले जघन्यानुभागसङ्क्रमो भवति, स च सादिरध्रुवश्च एतदन्यस्त्वजघन्यानुभागसङ्क्रमः, स चोपशमश्रेण्यामुपशान्तानां न भवति, तत प्रतिपाते च भवतीति सादि, तत्स्थानमप्राप्तस्यानादिः, ध्रुवाध्रुवौ अभव्यभव्यापेक्षया । तथा ज्ञानावरणपञ्चकस्त्यानर्द्धित्रिकवर्जदर्शनावरणषट्कान्तरायपञ्चकरूपाणां षोडशप्रकृतीनामजघन्यानुभागसङ्क्रमः त्रिप्रकार, तद्यथा–अनादिरध्रुवो ध्रुवश्च । तथाहि–एतासां मध्ये निद्राद्विकवर्जानां चतुर्दशप्रकृतीनां जघन्यानुभागसङ्क्रमं क्षीणमोहस्य समयाधिकावलिकाशेषायां, निद्राद्विकस्य तु आवलिकासङ्ख्येयभागाधिकावलिकाद्विकशेषायां स्थितौ वर्तमानस्य प्राप्यते, स च सादिरध्रुवश्च, ततोऽन्यः सर्वोऽप्य-

जघन्य., स चादेरभावादनादि, ध्रुवाध्रुवौ अभव्यभव्यापेक्षया। सातवेदनी ... वातप्रशस्तविह
गतित्रसबादरपर्याप्तप्रत्येकस्थिरशुभसौभाग्यसुस्वरादेययशःकीर्तिनिर्माणरूपाणा
कृतीनामनुत्कृष्टोऽनुभागसङ्क्रम. सादिवर्जत्रिविध., तथाहि-एतासा प्रकृतीना ...
ण्या वर्तमानः स्वस्वबन्धव्यवच्छेदकाले उत्कृष्टानुभागं बध्नाति, ततो
क्रान्ताया सत्या सक्रमयितुमारभते, स च तावत्संक्रमयति यावत्सयोगिचरमसमय, स
सादिरध्रुवश्च, तदन्य सर्वोऽप्यनुभागसक्रमोऽनुत्कृष्ट, स चादेरभावादनादि, ध्रुव
पूर्ववत्। प्रथमसहननोद्योतौदारिकससकरूपाणा नवाना ...नामनुत्कृष्टोऽनुभ
श्चतुर्विध, तद्यथा-सादिरनादिर्ध्रुवोऽध्रुवश्च। तथाहि-एतासामुद्योतवर्जानामष्टाना
नामत्यन्तविशुद्धपरिणाम. सम्यग्दृष्टिर्देव उत्कृष्टानुभागं बद्ध्वा ब...
सक्रमयति, स चोत्कृष्टानुभागसक्रम सादिरध्रुवश्च, तदन्य. सर्व ...ष्टोऽनु
क्रम., स च उत्कृष्टानुभागसक्रमत प्रतिपाते भवत्सादि तत्स्थानमप्राप्तस्यानादि, ध्रु...
पूर्ववत्। उद्योतनाम्नस्तु सप्तमक्षितिनैरयिको मिथ्यादृष्टि सम्यक्त्व ... उत्कृष्टानु
बध्नाति, बन्धावलिकायामतीतायां तावत् सक्रमयति, यावत्, ... बन्धतोऽन्त
द्वे षट्षष्टी सागरोपमाणा स च सादिरध्रुवश्च, यद्यपि सप्तमनरकपृ...
मुहूर्तेऽवश्यं मिथ्यात्व गच्छति तथाप्यग्रेतनभवेऽन्तर्मुहूर्तानन्तर य सम्यक्त्व
स इह गृह्यते, ततोऽन्तराले स्तोक मिथ्यात्वकालं तस्याविवक्षितत्वात् द्वे षट्षष्टी
पमाणामित्युक्तम्, उत्कृष्टानुभागसक्रमात् प्रतिपततोऽनुत्कृष्टानुभागसक्रम, स च स...
तत्स्थानमप्राप्तस्यानादि ध्रुवाध्रुवौ प्रागिव। प्रागुक्ताना सप्तदशप्रकृतीना ...
चोत्कृष्टानुभागसक्रमः उत्कृष्टसक्लेशे वर्तमानस्य मिथ्यादृष्टेः प्राप्यते, शेषकाले तु
दृष्टेरप्यनुत्कृष्ट एवेत्येतौ द्वावपि साद्यध्रुवौ, जघन्यस्तु भावित एव। तथा
तीना नवकस्य चोत्कृष्टानुभागसक्रम. प्रागेव भावित., जघन्यस्तु सूक्ष्मैकेन्द्रियस्य हत
भूतानुभागसत्कर्मण प्राप्यते, प्रभूतानुभागसत्कर्मघाताभावे तु ...जघन्यानुभागसक्रम
लभ्यत इत्येतौ द्वावपि साद्यध्रुवौ। वैक्रियसप्तक ...वैमनुज...
कोच्चैर्गोत्रतिर्यगायुर्लक्षणाना शुभाना चतुर्विंशतिप्रकृतीना विशुद्धौ,
वेदनीयदर्शनमोहनीयत्रिकमध्यमकषायाष्टकनरकत्रिकतिर्यग्द्विकाद्यजातिचतुष्कप्रथमवर्जसंह-
ननपञ्चकप्रथमवर्जसस्थानपञ्चकाशुभवर्णादिनवकाप्रशस्तखगत्युपघातस्थावरदशकनीचैर्गोत्र-
रूपाणामशुभाना षट्पञ्चाशत्प्रकृतीना चोत्कृष्टे सक्लेशे वर्तमानः सज्ञिपञ्चेन्द्रिय पर्याप्त
उत्कृष्टानुभागं बध्नाति, ततो बन्धावलिकायामतीतायां सक्रामति, तथाविधविशुद्धिसक्लेशा-
भावे त्वनुत्कृष्टानुभाग बध्नाति, तथैव पुन सक्रमयतीति द्वावपि साद्यध्रुवौ। जघन्यानु-
भागसक्रमस्तु सूक्ष्मैकेन्द्रियस्य हतप्रभूतसत्कर्मणो लभ्यते, प्रभूतानुभागसत्कर्मघाताभावे
तु तस्याप्यजघन्यानुभागसक्रम इत्येतावपि द्वौ साद्यध्रुवौ। कृता साद्यादिप्ररूपणा।

मूलप्रकृतिष्वनुभागसंक्रमस्य साद्यादिभंगयन्त्रम् ।

| प्रकृतीनां | अजघन्यः | | | | जघन्यः | | | | अनुत्कृष्टः | | | | उत्कृष्ट | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| | सादि | अध्रुव | अना० | ध्रुव | सादि | अध्रुवः | अना० | ध्रुवः | सादि | अध्रु० | अना० | ध्रु० | सादि | अध्रु० | अना० | ध्रु० |
| ज्ञाना०दर्शना० विघ्नानां | — | भव्यानां | अक्षीणमोहानां | अभव्या० | १२ मे समयाधिकाव०शेषे | सादित्वात् | — | — | उत्कृष्टाद्यतानां प्रथमसमये | सादित्वात् | — | — | नियतकालत्वात् | सादित्वात् | — | — |
| मोहस्य | ११ त पतितक्षायिकसम्य० | ,, | सादिस्थानाप्राप्ता० | ,, | क्षप १०मे समयाधिकाव० शेषे | ,, | — | — | ,, | ,, | — | — | ,, | ,, | — | — |
| आयुष | अहतसमूलानुभागानां | सादित्वात् | — | — | हतसमूलानुभागजीवानां | ,, | — | — | उत्कृष्टादन्येषां बन्धका० | भव्यानां | साद्यप्राप्तानां | अभव्यानां | उ सत्ताकानां मनु नानामनुत्तराणां च | ,, | — | — |
| नामगोत्र वेदनीयानां | ,, | ,, | — | — | ,, | ,, | — | — | ,, | ,, | आदेरभावात् | ,, | क्षपकाणां १२–१३मे | ,, | — | — |

उत्तरप्रकृतिष्वनुभागसंक्रमस्य साद्यादिभंगयन्त्रम् ।

| प्रकृतीनाम् | अजघन्य | | | | जघन्य | | | | अनुत्कृष्टः | | | | उत्कृष्टः | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| | सादि | अध्रु० | अना० | ध्रुव | सादि | अध्रुव | अना० | ध्रुव | सादि | अध्रुव | अना० | ध्रुव | सादि | अध्रु० | अना० | ध्रुव |
| ९ नोक० सज्व० ५ नाम् | उप० श्रेणितपतितानां | भ० | साद्यप्राप्तानां | अभव्या० | स्वस्वक्षयसमये | सादित्वात् | — | — | उत्कृष्टानुभागसंक्रमात्पतितानां | सादित्वात् | — | — | उत्कृ०संक्रान्तानां मिथ्यादृशां | सादित्वात् | — | — |

| भव्यानु० ४ नाम् | ,, | ,, | ,, | ,, | पुनर्बन्ध द्वितीयावलिका धसमये | ,, | — | — | ,, | ,, | — | — | ,, | ,, | — | — |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| श्यामा ५-द्रा ४-अस्त० ५ नाम् | — | ,, | आदेर भावात् | ,, | १२ मा समयाधिकाव० शेषे | ,, | — | — | ,, | ,, | — | — | ,, | ,, | — | — |
| सात-पचें-तै० ७-समच-शुभ वर्णादि ११-अगु० उच्छ्वा०-परा०-सुखग-त्रसादि १०-निर्माणानां (३३) | अहतप्रभूतानुभाग सत्ताकानां | सादित्वात् | — | — | हतप्रभूतानुभाग सत्कर्म सूक्ष्मैकेन्द्रियाणां | ,, | — | — | — | भव्यानां | क्षपक-सयोगिवजशेषाणां | अभव्यानां | स्वस्वक्षपककालात् सयोगि गुणपर्यन्त वर्त्तमानानां | ,, | — | — |
| वज्रर्ष०-औदा० ७ नाम् | ,, | ,, | — | — | ,, | ,, | — | — | उ०सत्कर्मास्पतितानां | ,, | साद्यप्राप्तस्य | ,, | अतिविशुद्धसम्य० देवानां | ,, | — | — |
| उद्योतस्य | ,, | ,, | — | — | ,, | ,, | — | — | ,, | ,, | ,, | ,, | सम्य०जसिमुत्तरसप्तनारकाणां | ,, | — | — |
| वै० ७-देव २-उच्चै आत०-जिन-आहा० ७-मनु० २-शुभायु ३ नाम् (२५) | ,, | ,, | — | — | ,, | ,, | — | — | ,, | ,, | — | — | विशुद्ध पर्या०संज्ञिपचेन्द्रियाणां | ,, | — | — |
| स्त्यानर्द्धित्रिकादि ५६ अशुभानामुत्कर्षोपाणां | ,, | ,, | — | — | ,, | ,, | — | — | ,, | ,, | — | — | संक्लिष्ट पं०संज्ञिप | ,, | — | — |

अथ स्वामित्वमुच्यते—तदपि द्विविध, तद्यथा—उत्कृष्टानुभागसङ्क्रमस्वामित्वं जघन्यानुभागसक्रमस्वामित्व च । तत्र पूर्वमुत्कृष्टानुभागसक्रमस्वामित्वकालप्रमाणनियमः प्रतिपाद्यते—तत्र मिथ्यादृष्टिरुत्कृष्टसङ्क्लेशे वर्तमान उत्कृष्टानुभाग बद्ध्वा बन्धावलिकामतिक्रम्योत्कृष्टानुभाग तावत्सक्रमयति यावदन्तर्मुहूर्तं काल त न विनाशयति अन्तर्मुहूर्तात्परतस्त्ववश्य मिथ्यादृष्टिः शुभप्रकृतीना सङ्क्लेशेन विशुद्ध्या त्वशुभप्रकृतीनामनुभाग विनाशयति, तदुक्त—"उक्कोसग पबधिय आवलियमइच्छिऊण उक्कस्स । जाव ण घाएइ तय सकमइ आमुहुत्तता" ॥ १ ॥ इति । अपवादमाह—आयुर्वर्जाना शुभाना षट्षष्टिप्रकृतीना सम्यग्दृष्टिः, तथा सम्यक्त्वमिश्रयोर्मिथ्यादृष्टि, क्षपणकाल वर्जयित्वा सम्यग्दृष्टिरपि न विनाशयति, तदुक्त—"सम्मद्दिट्ठी ण हणइ सुहाणुभाग असम्मदिट्ठी वि। सम्मत्तमीसगाण उक्कस वज्जिया खवण ॥२॥" इति । अत स्वामित्वमुच्यते तत्र ज्ञानावरणपञ्चकदर्शनावरणनवकासातवेदनीमोहनीयाष्टाविंशतिनरकद्विकतिर्यग्द्विकाद्यजातिचतुष्टयानाद्यसस्थानपञ्चकानाद्यसहननपञ्चकाशुभवर्णादिनवकोपघाताप्रशस्तखगतिस्थावरदशकनीचैर्गोत्रान्तरायपञ्चकेलक्षणानामष्टाशीतिसख्याकाना प्रकृतीनामुत्कृष्टानुभागसक्रमस्यासख्येयवर्षायुष्कतिर्यङ्मनुजान् आनतादिदेवाश्च वर्जयित्वा सूक्ष्माऽपर्याप्तादयश्चतुर्गतिका अपि मिथ्यादृष्टय स्वामिनो भवन्ति । असख्येयवर्षायुषामानतादिदेवाना चोत्कृष्टसङ्क्लेशाभावेनोत्कृष्टानुभागबन्धाभावात् उत्कृष्टसक्रमोऽपि न भवतीति तद्वर्जनम् । तथातपोद्योतमनुजद्विकौदारिकसप्तकप्रथमसहननरूपाणा द्वादशसख्याकाना प्रकृतीना चतुर्गतिका सर्वेऽपि सूक्ष्मापर्याप्तादयोऽसख्येयवर्षायुस्तिर्यग्मनुष्यमनुष्योपपातदेवसहिता मिथ्यादृष्टय सम्यग्दृष्टयो वा स्वामिनो भवन्ति । तथाहि—सम्यग्दृष्टय आयुस्त्रिकवर्जसर्वासा शुभप्रकृतीनामुत्कृष्टमनुभाग न विघातयन्ति, किन्तु द्वे षट्षष्टी सागरोपमाणा यावदनुवर्तयन्ति, तत उत्कृष्टतो द्वे षट्षष्टी सागरोपमाणा यावदातपोद्योतवर्जदशाना प्रकृतीनामुत्कृष्टानुभागमविनाश्य पश्चात्सर्वत्र यथायोग्य समुत्पद्यन्ते, ततो मिथ्यादृष्टिष्वप्येतासामेव दशाना प्रकृतीनामुत्कृष्टतोऽन्तर्मुहूर्तं यावदुत्कृष्टानुभागसक्रमो लभ्यते आतपोद्योतौ तु मिथ्यादृष्टिनैव बध्यमानत्वेन तत्र तयोरुत्कृष्टानुभागसक्रमो नासभवी मिथ्यात्वात्प्रतिपत्य सम्यक्त्व गते सम्यग्दृष्टावपि उत्कृष्टतो द्वे षट्षष्टी सागरोपमाणा यावदुत्कृष्टानुभागसक्रमो लभ्यते, तयो शुभप्रकृतित्वेन सम्यग्दृष्टे सत उत्कृष्टानुभागाविनाशकत्वादिति द्वावप्युत्कृष्टानुभागसक्रमस्वामिनौ । देवायुषोऽप्रमत्तयतिरुत्कृष्टानुभाग बध्नाति, नरकायुषो मिथ्यादृष्टि सक्लिष्टाध्यवसाय उत्कृष्टानुभाग बध्नाति, मनुजतिर्यगायुषो सुविशुद्धमिथ्यादृष्टिरुत्कृष्टानुभाग बध्नाति । बन्धावलिकायामतीतायां सत्या यावन्निजायुष समयाधिकावलिका शेषा तावत्सक्रमयति । तत आयुषामुत्कृष्टानुभागसक्रमस्वामिन सम्यग्दृष्टयो मिथ्यादृष्टयो वा प्राप्यन्ते । पञ्चसङ्ग्रहबृहद्वृत्तौ कर्मप्रकृतिवृत्तौ च "चतुर्णामप्यायुषामुत्कृष्टानुभाग बध्वा ब धावलिकायामतीतायां सम्यग्दृष्टयो मिथ्यादृष्टयो वोत्कृष्टानुभा संक्रमयति" इत्यत्राप्ययमेव तात्पर्यार्थोऽवसीयते । सातवेदनीयदेवद्विकपञ्चेन्द्रियजातिवैक्रि

च्छ्वासागुरुलघुत्रसदर्शकनिर्माणतीर्थकरोच्चैर्गोत्ररूपाणां चतुःपञ्चाशत्सङ्ख्याकानां स्वस्वबन्धव्यवच्छेदसमये उत्कृष्टानुभाग बद्ध्वा बन्धावलिकायामतीतायामुत्कृष्टानुभागसक्रम तावत्करोति यावत्सयोगिचरमसमयः। स्वस्वबन्धव्यवच्छेदस्योपरितनगुणस्थाने वर्तमानाः सर्वेऽपि सयोगिकेवलिपर्यवसाना उत्कृष्टानुभागसक्रमस्वामिनो भवन्ति। अत्र पतद्ग्रहबन्धसमये प्रकृत्यन्तरनयनानुभागसक्रमस्तदभावे त्वपवर्त्तनारूप एव, तदेवमुक्तमुत्कृष्टानुभागसक्रमस्वामित्वम्।

उत्कृष्टानुभागसंक्रमस्वामिनः ।

| प्रकृतय | स्वामिन. | उ० तत्काल: |
|---|---|---|
| नरकायुर्वर्जं ८८ अशुभानां | युगलिकानतादिवर्जा मिथ्यादृष्टय सर्वे जीव भेदा | अन्तर्मुहूर्तं |
| सात० –उद्यो० मनु० २– औदा० ७–वज्रर्ष० (१२) | सम्यग्दृष्टो मिथ्यादृष्टो वा सव जीवभेदा | १३२ सागराणि पर्यन्त |
| ४ आयुषाम् | उ० अनुभागबन्धका सम्यग्दृष्टो मिथ्यादृष्टोऽपि | शेषपर्यन्त |
| ५४ उक्तशेषाणा | क्षपकाः स्वस्वक्षयकालत | क्षयकालादारभ्य सयोगिपर्यन्त |

अथ जघन्यानुभागसक्रमस्वामित्वं प्रतिपादयन्नादौ ...नु दर्श्यते–तत्र सभविनीना सर्वघातिप्रकृतीना देशघातिप्रकृतीना वाऽनुभागः क्षपकश्रेण्य...न्तरकरणादर्वाक् सूक्ष्मैकेन्द्रियानुभागसत्कर्मणोऽनन्तगुणो भवति, कृते त्वन्तरकरणे आ... द्वादशकषायदर्शनमोहनीयत्रिकस्त्यानर्द्धित्रिकमित्यष्टादशवर्जैकोनत्रिंशत्प्रकृतीना पू... न्द्रियसम्बन्धिनोऽप्यनुभागसत्कर्मणो हीनो भवति । तथाऽसातवेदनीयप्रथमवर्जस... पञ्चकप्रथमवर्जसस्थानपञ्चकाशुभवर्णादिनवकोपघाताप्रशस्तखगत्यपर्याप्तास्थिराशुभदुर्भगदु... स्वरानादेयायशःकीर्तिनीचैर्गोत्ररूपाणा त्रिंशत्सख्याकाना ... पञ्चेन्द्रियसम्बन्धिनोऽनुभागसत्कर्मणोऽनन्तगुणमनुभागसत्कर्म केवलिनो विद्यते । तथा ...च सति ज्ञानावरणपञ्चकदर्शनावरणषट्कान्तरायपञ्चकसज्वलनचतुष्कनोकषायनवकरूपाणामेकोनत्रिंशत्प्रकृतीनामन्तरकरणे कृते सति क्षपकस्यैव जघन्यानुभागसङ्क्रमसभवः । अनन्तानुबन्धिचतुष्कस्य विसयोजना कृत्वा मिथ्यात्वं गतस्य द्वितीयावलिकाप्रथमसमये जघन्यानुभागसक्रमसभव । उक्तरूपाणा त्रिंशदशुभप्रकृतीना जघन्यानुभागसक्रमसभवो न सयोगिकेवलिनि, किन्तु केवल्यपेक्षयाऽनन्तभागकल्पतदनुभागस्य हतप्रभूतानुभागसत्कर्मणः सूक्ष्मैकेन्द्रियादेर्द्रष्टव्य इति । अधुना जघन्यानुभागसक्रमस्वामिन उच्यन्ते–ज्ञानावरणपञ्चकान्तरायपञ्चकनिद्रापञ्चकवर्जदर्शनावरणचतुष्करूपाणा चतुर्दशप्रकृतीना क्षीणकषायः समयाधिकावलिकाशेषाया स्थितौ वर्तमानो जघन्यानुभागं सक्रमयति । निद्राद्विकस्य

त्वावलिकासङ्ख्येयभागाधिकावलिकाद्विकशेषायां वर्तमान क्षीणकषायो जघन्यानुभाग सक्रामति । सम्यक्त्वमिश्रयो स्वस्वचरमानुभागखण्डसङ्क्रमणकाले जघन्यानुभागसक्रमो भवति। नवाना नोकषायाणा सञ्ज्वलनचतुष्कस्य च क्षपकश्रेण्या वर्तमानोऽन्तरकरणे कृते सति क्षपकक्रमेण जघन्यस्थितिसक्रमणकाले जघन्यानुभाग संक्रमयति । चतुर्णामप्यायुषा जघन्या स्थिति बद्ध्वा बन्धावलिकाया॰ परतो यावत्समयाधिकावलिकाशेषा भवति तावज्जघन्यानुभागसक्रमो लभ्यते, जघन्या स्थिति बध्नन् जघन्यमनुभाग बध्नातीति ज्ञापनार्थं जघन्यस्थितिबन्धग्रहण कृतम् । नरकद्विकमनुजद्विकदेवद्विकवैक्रियसप्तकाहारकसप्तकोच्चैर्गोत्रलक्षणानामेकविंशत्युद्वलनप्रकृतीना तीर्थकरनाम्न॰ संयोजनानां च जघन्यानुभाग बद्ध्वा बन्धावलिकायामतीतायां जघन्यानुभाग सक्रमयति । तत्र वैक्रियसप्तकदेवद्विकनरकद्विकानामसज्ञिपञ्चेन्द्रिय, मनुजद्विकोच्चैर्गोत्रयो सूक्ष्मनिगोद[1], आहारकसप्तकस्याप्रमत्त[1], तीर्थकरस्याविरतसम्यग्दृष्टि, अनन्तानुबन्धिना पश्चात्कृतसम्यक्त्वो मिथ्यादृष्टि । शेषाणा शुभानामशुभाना च सप्तनवतिसङ्ख्याकाना वायुकायिकोऽग्निकायिको वा सूक्ष्मैकेन्द्रिय प्रभृतविनाशितानुभागसत्कर्मा स्वसम्बन्ध्यनुभागसत्कर्मणो न्यूनतरमनुभाग यावत् बध्नाति तावदेकेन्द्रियभवे द्वीन्द्रियादिभवे वा वर्तमानो जघन्यमनुभाग सक्रमयन् जघन्यानुभागसङ्क्रमस्वामी भवतीति । तदेवमुक्त जघन्यानुभागसक्रमस्वामित्वम् । तदेवमभिहितोऽनुभागसक्रम इति ।

जघन्यानुभागसंक्रमस्वामिनः ।

१ क्षपकस्यान्तरकरणादर्वाग् घात्यनुभागः सूक्ष्मैकेन्द्रियादनन्तगुणः
२ क्षपकस्यान्तरकरणे कृते घात्यनुभाग सूक्ष्मैकेन्द्रियादहीन
३ १० अघात्यशुभानुभाग केवलिनोऽसज्ञिपञ्चेन्द्रियादनन्तगुण

| प्रकृतय | स्वामिन |
|---|---|
| घातिन | ज० स्थि० सक्रमका अन्तरकरणादूर्ध्व |
| ९ नोक० ४ सज्व० | क्षपका ज० स्थि० सक्रमका ९ मा |
| ज्ञा०५-वि०५-दर्श० ४ | क्षीणमोहा समयाधिकाव० शेषे |
| निद्रा २ | क्षी० आ० २ भा० अस० शेषे |
| सम्य० मिश्रयो | क्षपकाश्चान्त्यखण्डसक्रमका |
| आयु ४ णाम् | ज० स्थि० बन्धका |
| नरक २-देव २-वै० ७ | ज० अनु० बन्धका अस० पञ्चे० |
| मनु० २-उच्चै० | सूक्ष्मनिगोदा |
| आहा० ७ | अप्रमत्ता |
| जिननाम | अविरतसम्यग्दृश |
| अन ता० ४ | पश्चात्कृतसम्यक्त्वाः मिथ्यादृश |
| ९७ उक्तशेषाणां | हतप्रभूतानुभागसत्ताकाग्निवायुकायिकौ, अन्यभवेऽपि तावेव यावद् बृहदनुभाग न बध्नत |

समाप्तोऽनुभागसङ्क्रम ॥



1-1-2 अर्हंदसूरिपादे पाठस्त इह स्त्रात्र लिखितम्

नोत्कीर्यते, एवमन्तर्मुहूर्तेन कालेन तृतीयं स्थितिखण्ड पल्योपमासङ्ख्येयभागमात्रमुत्कीर्यते, एवमुपान्त्यस्थितिखण्ड यावद्वाच्यम् । प्रथमस्थितिखण्डाद्द्वितीयस्थितिखण्ड स्थित्यपेक्षया विशेषहीन, ततोऽपि तृतीयस्थितिखण्ड द्वितीयस्थितिखण्डापेक्षया विशेषहीन, ततोऽपि चतुर्थ स्थितिखण्ड पल्योपमासख्येयभागमात्र तृतीयात् स्थितिखण्डात् विशेषहीनमन्तर्मुहूर्तेन कालेनोत्कीर्यते । एव प्रत्येकमन्तर्मुहूर्तेन कालेनोत्कीर्यमाणानि पल्योपमासख्येयभागमात्राणि स्थितिखण्डानि पूर्वपूर्वस्थितिखण्डापेक्षया विशेषहीनानि विशेषहीनानि तावद्वाच्यानि यावत् द्विचरमस्थितिखण्डम् । एतानि च सर्वाण्यनन्तरोपनिधया स्थित्यपेक्षया पूर्वपूर्वस्थितिखण्डात् यथोत्तरमुत्तराणि स्थितिखण्डानि विशेषहीनानि विशेषहीनानि । परम्परोपनिधया तु प्रथमस्थितिखण्डापेक्षया कानिचित् स्थितिखण्डान्यसख्येयभागहीनानि, कानिचित् सख्येयभागहीनानि, कानिचित् सख्येयगुणहीनानि, कानिचिदसख्येयगुणहीनानीत्येव च तु स्थानपतितानि । प्रथमस्थितिखण्डं तु केषाञ्चित् खण्डाना स्थित्यपेक्षयाऽसख्येयभागाधिक, केषाञ्चिदपेक्षया सख्येयभागाधिक, केषाञ्चिदपेक्षया सख्येयगुणाधिकं, केषाञ्चिदपेक्षयाऽसख्येयगुणाधिकमिति । प्रदेशपरिमाणचिन्तायां तु प्रथमस्थितिखण्डगतप्रदेशापेक्षया द्वितीयस्थितिखण्डगतप्रदेशा विशेषाधिका, द्वितीयस्थितिखण्डगतप्रदेशापेक्षया तृतीयस्थितिखण्डगतप्रदेशा विशेषाधिका, एवमुपान्त्यस्थितिखण्ड यावद्वाच्यमित्युक्ताऽनन्तरोपनिधा । परम्परया तु प्रथमस्थितिखण्डगतप्रदेशापेक्षया किञ्चित् स्थितिखण्डं प्रदेशापेक्षयाऽसख्येयभागाधिक, किञ्चित्स्थितिखण्ड सख्येयभागाधिक, किञ्चित्सख्येयगुणाधिकं, किञ्चिदसख्येयगुणाधिकमिति चतु स्थानपतितानि । स्थितिखण्डानामुत्करणविधिश्चायम्—उत्कीर्यमाणस्थितिखण्डान्तर्गतसर्वसमयेभ्य प्रथमसमये स्तोक दलिकमुत्कीर्यते, द्वितीयसमये ततोऽसख्येयगुण, तृतीयसमये ततोऽप्यसख्येयगुणमेवमसख्येयगुण २ दलिक तावदुत्कीर्यते यावत्तस्यान्तर्मुहूर्तचरमसमय । गुणकारश्चात्र पल्योपमासख्येयभागलक्षणो वाच्य । उत्कीर्यमाण च दलिक किञ्चित्स्वस्थाने किञ्चिच्च परस्थाने प्रक्षिप्यते । उत्कीर्यमाणाना क्व कियान् प्रक्षेप इति चेदुच्यते—स्वस्थाने परस्थाने च । तत्र स्वस्थाने प्रतिसमयमसख्येयगुणश्रेण्या प्रक्षिपति, परस्थाने प्रतिसमय विशेषहीन विशेषहीन प्रक्षिपति । तथाहि—प्रथमे स्थितिखण्डे उत्कीर्यमाणे प्रथमसमये यत्परस्थाने प्रक्षिपति तत्सर्वस्तोकम्, ततोऽपि प्रथमसमये एव स्वस्थाने यत्प्रक्षिपति तत्प्रथमसमयपरस्थानप्रक्षिप्तादसख्येयगुण, ततोऽपि यद् द्वितीयसमये स्वस्थाने प्रक्षिपति तत्प्रथमसमयस्वस्थानप्रक्षिप्तादसख्येयगुण, द्वितीयसमये यत्परस्थाने प्रक्षिपति तत्प्रथमसमयपरस्थानप्रक्षिप्ताद्विशेषहीनं, ततोऽपि तृतीयसमये यत्स्वस्थाने प्रक्षिपति तद्द्वितीयसमयस्वस्थानप्रक्षिप्तादसख्येयगुण, यत्पुन तृतीयसमये परस्थाने प्रक्षिपति तद्द्वितीयसमयपरस्थानप्रक्षेपात् विशेषहीनम्, एव तावद्वाच्य यावदन्तर्मुहूर्तचरमसमय । एव सर्वेष्वपि स्थितिखण्डेषूपान्त्यस्थितिखण्डपर्यवसानेषु वाच्यमिति । चरमस्थितिखण्डमुपान्त्यस्थितिखण्डात् स्थित्यपेक्षयाऽसख्येयगुण, प्रथमस्थितिखण्डाच्च दलिकापेक्षया चरमस्थितिखण्डम

सङ्ख्येयगुण स्थित्यपेक्षया चासंख्येयभागकल्पमिति । चरमस्थितिखण्डमप्यन्तर्मुहूर्तेन नोद्वलयति । तस्य च यत्प्रदेशाग्र तदुदयावलिकागतं मुक्त्वा शेषं सर्वमपि परस्थाने मति, न स्वस्थाने, आवलिकागतं तूदयवतिषु स्तिबुकेन सङ्क्रामति । तदपि स्तोक द्वितीयसमयेऽसङ्ख्येयगुण ततोऽपि तृतीयसमयेऽसङ्ख्येयगुणमेवं यावच्चर चरमसमये तु यद्दलिकं परप्रकृतिषु सङ्क्रामति स सर्वसङ्क्रमः, सङ्क्रमार्हस्य सर्वस्यापि द निर्लेपनात्। अथ चरमखण्डस्य प्रदेशपरिमाणमुच्यते–तत्र द्विधा मार्गणा, क्षेत्रतः यावत्प्रमाण द्विचरमस्थितिखण्डसत्क दलिकं चरमसमये परप्रकृतिषु प्रक्षिप्यते ताव यदि चरमस्थितिखण्डस्य दलिकं प्रतिसमयमपह्रीयते तदा ...
त्सर्पिण्यवसर्पिणीभिर्निर्लिप्यते, उपान्त्यस्थितिखण्डस्यान्तिमसमये यावन्तः प्रदेशा यान्तिमस्थितिखण्डरूपे स्वस्थाने प्रक्षिप्यन्ते, तावन्त एवान्तिमस्थितिखण्डस्य प्रतिसमयमपह्रीयमाणा अपह्रीयमाणाः पल्योपमासङ्ख्येयभागमात्रेण कालेन निश्शेषा भवन्ति इति कालतो मार्गणा । उपान्त्यखण्डस्य चान्तसमये यावन्तः प्रदेशा प्रक्षिप्यन्ते तावत्प्रमाणेन मानेनैकत्र चरमस्थितिखण्डस्य कर्मदलिकमपह्रीयते शप्रदेश इत्येनमपहारे क्रियमाणे ... अङ्गुलमात्रक्षेत्रगत ... प्रदेश ...
यतमेन भागेनापहृत भवति । द्वि ... स्थितिसत्कपर ...
चरमस्थितिखण्डे खण्डुकानि अङ्गुलासङ्ख्येयतमभागगतप्रदेशप्रमाणानि भवन्तीत्यर्थः, क्षेत्रतो मार्गणा। तदुक्त पञ्चसङ्ग्रहे–"पलियस्ससंखभाग अन्तमुहुत्तेण ठिईए उव्वलइ।एव पलि संखियभागेण कुणइ निलेव ॥ १ ॥ पढमाओ बीयखण्ड विसेसहीण ठिईए अवणेइ । एव जाव दु असंखगुणिय तु अ तसय ॥ २ ॥ खण्ड दल सट्ठाणे समए समए असखगुणणाए । सेढीए विसेसहीणाए सछुभइ ॥ ३ ॥ दुचरिमखण्डस्स दल चरिमे ज पइ सपरट्ठाणमि । दल पञ्जुलसंखभागेहिं ॥ ४ ॥" इति । ... द्विकोच्चैर्गोत्रसम्यक्त्वमिथ्यात्वमिश्रानन्तानुबन्धिचतुष्कमध्यमकषायाष्टकनवनोकषायस्त्य नर्द्धित्रिकनामत्रयोदशकसञ्ज्वलनक्रोधमानमायारूपाणा ... चतु ... भवति । तत्राहारकसप्तकसत्कर्माविरतिभावगमनादारभ्यान्तर्मुहूर्तात्परत मुद्वलयति, तच्च सर्वथा पल्योपमासङ्ख्येयतमेन भागेन निर्लेपीभवति, तदुक्तं ... भिन्नमुहुत्ता अविरइगओ पउव्वलए । जा अविरओ त्ति उव्वलइ पल्लभागेऽसंखतमे" ॥ १
इति । पूर्वोक्तविधिनाहारकसप्तकस्यान्तर्मुहूर्तेनान्तर्मुहूर्तेन कालेन मात्र पल्योपमासङ्ख्येयभागमात्रं स्थितिखण्डमुत्किरति, ...
खण्डमूनमूनतर द्विचरमस्थितिखण्ड यावदुत्किरति । ...
खण्डमसङ्ख्येयगुणहीनम् । प्रक्षेपविधिस्तु द्विचरमस्थितिखण्ड यावत् स्वस्थाने ख्येयगुण, परस्थाने विशेषहीन विशेषहीन दल प्रक्षिपतीति। आहारकसप्तकस्य खण्डसत्कदलिकप्रक्षेपविधिरपि प्राग्वत् वाच्यः।अष्टाविंशतिसत्कर्मा मिथ्यादृष्टि पूर्वं ...

॥ उद्वलनासंक्रमस्य चित्रम् ॥

○○○○○ | ○○○○○○○○○ | ○○○ | ○○○ | ○○○ | ○○○○ | ○○○○ | ○○○○○ | ○○○○○○○

उदयावलिका (उद्वलनायोग्या इति उदयेनैव वेद्यते)

अन्तिमस्थि० खण्ड उपान्त्यादसंख्येयगुण प्रथमाद्या संख्येयभाग दलिकापेक्षया प्रथमादसंख्येयगुण प्रक्षेपः परस्थान एव प्रतिसमयम् संख्येयगुण' अत्रैव चरिम प्रक्षेपे सर्वसंक्रम

उपान्त्य स्थि० खण्ड

५ मम्

४ थम्

३ स्थि० खण्ड

प०असं० द्वितीय स्थि०खण्ड प्रथमा त् विशेषहीन ह्यी अंतमु० कालेनो द्वलनयोग्य, प्रदे शापेक्षया विशेषा धिकमेवमग्रेतन मपि स्थि०खण्डम्

पल्यासं० भा० प्रथम स्थितिखण्डमन्तमु० कालेनोद्वलनयोग्य दलिकप्रक्षेप स्वस्मिन् प्रतिसमयमसंख्ये० गुण परस्मिन् प्रतिसमय विशेषहीनमेवमुपान्त्य यावत्

○ — प्रदेशोपचित स्थितिस्थान, इतागतानि दर्शितानि स्थितिस्थानानि क्रमेण विशेषप्रदेशोपचितानीति कृत्वा क्रमेण गुरुगुरुतराणि ।

क्त्वमोहनीयं ततो मिश्रमोह-
नीय पूर्वोक्तविधिनोद्वलयति ।
एवमेकेन्द्रिय• पञ्चनवतिसत्क-
र्मा पूर्वं देवद्विक, ततोऽनन्तर
वैक्रियसप्तकं नरकद्विकं च यु-
गपदुद्वलयति । तथा सूक्ष्मत्र
सस्तेजस्कायिको वायुकायि
को वा पूर्वमुच्चैर्गोत्र, तत
पश्चात् मनुजद्विकमुद्वलयति।
एपा पल्योपमासंख्येयभागमा
त्रकालभाविनी मिथ्यादृष्टिक
र्तृकोद्वलनोक्ता । अथ सम्य
ग्दृष्टिसत्कोच्यते–तत्रानन्ता
नुबन्धिचतुष्कमिथ्यात्वमि-
श्राणामन्तर्मुहूर्तेन कालेन स्व
स्वक्षपकोऽविरतसम्यग्दृष्टिर्दे
शविरत प्रमत्तसयतोऽप्रम
त्तसयतो वोद्वलको वाच्य ।
मध्यमकषायाष्टकादीना षट्
त्रिंशत्प्रकृतीना स्वस्वक्षपण
कालेऽनिवृत्तिबादरोऽन्तर्मुहूर्त
कालेनोद्वलयति । एपाऽन्त
र्मुहूर्तकालभाविनी सम्यग्दृष्टि
कर्तृकोद्वल्नेति उक्त उद्वल
नासक्रम ।

अथ विध्यातसक्रमलक्षण
मुच्यते–यासा प्रकृतीना भ
वप्रत्ययतो गुणप्रत्ययतो वा
बन्धो न भवति तासा विध्या
तसक्रमो भवति । कासा प्र
कृतीना भवतो गुणतो वा

उद्वलनासक्रमस्य यन्त्रम् ।

| प्रकृतीनाम् | उद्वलनस्वामिन | उद्वलनकाल |
|---|---|---|
| (मिथ्यादृशो २३ क्षीनां) आहा० ७ नां | अविरता | पल्यासङ्ख्येयभाग |
| सम्यक्त्वस्य | २८ मोहसत्ताकमिथ्यादृशः | ,, |
| मिश्रस्य | ,, | ,, |
| देव २ कस्य (युगपत्) | आहा० जिनवर्जं ९५ नाम सत्ताका एकेन्द्रिया | ,, |
| वैक्रिय ७ } नरक २ } युगपत् | ,, | ,, |
| उच्चैर्गोत्रस्य | अग्नियायुकायिकौ | ,, |
| नरद्विकस्य | ,, | ,, |
| (सम्यग्दृशोतां ४२) स्त्यानर्द्धि ३ | ९ मे क्षपका | अन्तमुहूर्तं |
| स्था०–सू०–तिर्य० २ नरक २–आतप–उ द्योत–एके०–विकल३ –साधा० (१३) | ,, | ,, |
| मध्यकषाय ८ | ,, | ,, |
| नोकषाय ९ | ,, | ,, |
| सं०क्रो०–मान–माया | ,, | ,, |
| मिथ्यात्वस्य | ४–५–६–७गुणस्था | ,, |
| मिश्रस्य | ,, | ,, |
| अनन्ता० ४ नाम् | ,, | ,, |

सर्वेण दलिकनिक्षेप स्वस्मिन् परस्मिन् च, तत्रापि स्वस्मिन् प्रतिस मयमसङ्ख्येयगुणनया परस्मिन् च विशेषहान्या उपान्त्यस्थितिखण्ड यावत्, अन्त्यस्थितिखण्डस्य दलिकमसं० गुणनया परस्मिन्नेव, एकस्य स्थितिखण्डस्यो त्किरणकालोऽन्तर्मुहूर्त्तम्, अस्य बाधकः सर्वसंक्रम सर्वान्त्यसमये भवति।

बन्धो न भवतीति चेत्
च्यते–नर
वरचतुष्क ऽातपसे

पोडशप्रकृती' सास्वादना
णप्रत्ययतो न बध्नन्ति,
एतासा सास्वादनादिषु
ध्यातसक्रमो भवति । त
नरकायुषः सक्रम एव न
वति, आयुषा
यनरूपसक्रमस्य प्रागेव
षेधात्, नापि
"दुइय तइया न
गपि" इत्यनेन द्वितीये तृ
च प्राक् प्रतिषेधात्,
शानामेव विध्यातसक्रमो
वति। तु
त्वस्याऽपि विध्यातसक्रमो
वति ।
निकदौर्भाग्यत्रिकानन्तानुब-

मसहननोद्योताशुभविहायो
तिस्त्रीवेदनीचैर्गोत्ररूपा'
विंशतिः प्रकृतयो
बन्ध नायान्ति,
सक्रमे तु

विंशति प्रकृतय', सास्वादनोक्ताश्चतुर्दश प्रकृतय उभयमिलनेऽष्टात्रिंशत् मिश्रे प्राप्यन्ते । अविरतसम्यग्दृष्टौ तु मिथ्यात्वमिश्रयुताश्चत्वारिंशद् विध्यातसक्रमे प्राप्यन्ते प्रथमसहननौदारिकद्विकमनुजत्रिकाप्रत्याख्यानकषायचतुष्करूपा दश प्रकृतयो देशविरतादौ बन्ध नायान्ति, विध्यातसक्रमे तु मनुष्यायुर्वर्जा नव, प्रागुक्ताश्चत्वारिंशत्, उभय-

मिलने एकोनपञ्चाशत्प्रकृतयो देशविरते प्राप्यन्ते, औदारिकसप्तकग्रहणे तु चतुःपञ्चाशदिति। प्रत्याख्यानावरणचतुष्कं प्रमत्तादौ न बन्धमायाति, अतस्तद्युता विध्यातसंक्रमेऽष्टपञ्चाशत् प्रकृतयः प्रमत्ते प्राप्यन्ते। अरतिशोकासातवेदनीयास्थिरद्विकायशःकीर्तिदेवायूरूपाः सप्त देवायुर्वर्जा वा षट् प्रकृतयोऽप्रमत्तादौ बन्धं नायान्ति, विध्यातसंक्रमे तु षट् विद्यन्ते, अतोऽप्रमत्ते चतुःषष्टिः प्राप्यते। अपूर्वकरणे निद्राद्विकबन्धव्यवच्छेदादर्वाक् मिथ्यात्वमिश्रानन्तानुबन्धिचतुष्कातपोद्योतमनुजद्विकौदारिकसप्तकप्रथमसंहननरूपाष्टादशवर्जशेषषट्चत्वारिंशत्प्रकृतीनां गुणसंक्रमत्वेन न विध्यातसंक्रमः, अनन्तानुबन्धिनां क्षीणत्वेनोपशान्तत्वेन वा संक्रमाभावः, शेषचतुर्दशप्रकृतीनां विध्यातसंक्रमः, सातोच्चैर्गोत्रवर्जशेषबध्यमानानां तु वक्ष्यमाणो यथाप्रवृत्तसंक्रमः, एवं सर्वत्र बन्धव्यवच्छेदादर्वाग् बन्धेऽबन्धे वा यथाप्रवृत्तसंक्रमो द्रष्टव्यः। सातोच्चैर्गोत्रयोः प्रतिग्रहाभावान्न संक्रमः। सम्यक्त्वस्य तु सम्यग्दृष्टेः परप्रकृतिनयनरूपसंक्रम एव न भवति। आयुषां संक्रमाभावः प्राक् प्रतिपादित एव। निद्राद्विकबन्धव्यवच्छेदे तु गुणसंक्रमे तद्विकं प्रक्षेपणीयम्, यथाप्रवृत्तसंक्रमे च द्विकोनं कर्तव्यम्। त्रिंशद्बन्धव्यवच्छेदे तु गुणसंक्रमे उपघाताशुभवर्णादिनवकं प्रक्षिप्यते, वैक्रियसप्तकाहारकसप्तकतैजससप्तकशुभवर्णाद्येकादशकदेवद्विकागुरुलघुपराघातोच्छ्वासनिर्माणतीर्थकरशुभविहायोगतित्रसनवकप्रथमसंस्थानपञ्चेन्द्रियजातिरूपैकपञ्चाशत् प्रागुक्ता च चतुर्दशोभयमिलने पञ्चषष्टिप्रकृतीनां विध्यातसंक्रमो यद्यपि अपूर्वकरणे नोक्तः, तथापि एकस्या यशःकीर्तेः व्युत्सरदातसरस्यानस्य संक्रम्यमाणत्वेनैतासां संक्रमस्तु संभवत्येव, स च न यथाप्रवृत्तसंक्रमः, गुणप्रत्ययतो भवप्रत्ययतो वा बन्धाभावात्, नापि गुणसंक्रमः, प्रशस्तत्वात्, आसां नाप्युद्वलनासंक्रमः, श्रेण्यां तु एतासामुद्वलनासंक्रमेऽनुक्तत्वात्, यद्यप्यातपोद्योतयोरुद्वलनासंक्रम उक्तः, तथापि तत्स्वामी अनिवृत्तिकरणः, नापूर्वकरणः, नापि सर्वसंक्रमः, उद्वलनासंक्रमचरमप्रक्षेपे तस्याऽभिधानात्, ततः परिशेषात् विध्यातसंक्रमः संभाव्यते। सातवेदनीयोच्चैर्गोत्रयशःकीर्तिवर्जशेषबध्यमानानां यथाप्रवृत्तसंक्रमः। अनिवृत्तिकरणेऽप्येवमेव, नवरमातपोद्योतयोः क्षपकश्रेण्यामुद्वलनासंक्रमोऽपि वक्तव्यः। हास्यादीनां तु गुणसंक्रम उद्वलनासंक्रमश्च। एवं पुवेदसंज्वलनत्रिकयोर्बन्धव्यवच्छेदात्पूर्वं यथाप्रवृत्तसंक्रमः उद्वलनासंक्रमश्च, बन्धव्यवच्छेदानन्तरं तु क्षपकश्रेण्यां गुणसंक्रमोऽपि भवति, उपशमश्रेण्यां बन्धव्यवच्छेदानन्तरं समयोनावलिकाद्विकबद्धं यथाप्रवृत्तसंक्रमेण परप्रकृतिषु संक्रमयति, तदुक्तं पञ्चसंग्रहमूलवृत्तौ—"यथाप्रवृत्तसंक्रमेणान्यासु च प्रकृतिषु संक्रमयति" इति। यत्तु वाचकवरैः—"आतपोद्योतयोश्च शुभत्वान्न गुणसंक्रमः, अशुभप्रकृतीनामेव तत्संभवात्" इति संक्रमकरणे गा० ६९ वृत्तौ गुणसंक्रमलक्षणाधिकारे गुणसंक्रमं प्रतिषिध्य क्षपकश्रेण्यां—"षोडशापि कर्माणि गुणसंक्रमेण प्रतिसमयं प्रक्षिप्यमाणानि निःशेषतोऽपि क्षीणानि भवन्ति" इत्यत्रातपोद्योतयोर्गुणसंक्रम उक्तः, स उद्वलनासंक्रमस्य चरमस्थितिखण्डसत्कं दलं प्रतिसमयं परप्रकृतिषु असंख्येयगुणश्रेण्या संक्रम्यमाणत्वेन गुणसंक्रमशब्देनाभिधीयमानोऽपि वस्तुतः उद्वलनासंक्रम एव

सभाव्यते । अन्तरकरणे च कृते सज्वलनलोभस्यापि न संक्रमः । सूक्ष्मसम्पराये कीर्तिसातवेदनीयोच्चैर्गोत्रवर्जवध्यमानाना यथाप्रवृत्तसक्रम", गुणसक्रम", अवध्यमानशुभाना विध्यातसक्रम । सप्तमं गुणस्थानकं यावत् स्वीकारे तु यथा पुवेदादीनामुपशमश्रेण्या बन्धव्यवच्छेदेऽपि यथाप्रवृत्तसक्रम' तद्वदपूर्वकरणादावपि विध्यातसक्रमस्वीकारेऽपि न क्षतिः, पर तादृक् विधिवाक्य धवाक्य वा गोमटसार विहायान्यत्र न दृष्टम्, अत [illegible] सक्रमोऽपूर्व सभावित । तथा [illegible] पलक्षणानां विंशतिप्रकृतीना नैरयिकाः सनत्कुमारादयो देवाश्च भवप्रत्ययतो भवन्ति । देवनारकाणां देवनारकायुषो' बन्धाभावेऽपि सक्रमाभावेन ग्रहणं न कृतमेवमग्रेऽपि द्रष्टव्यमिति । एकेन्द्रियजात्यातपस्थावरनामवर्जाना कृतीनामीशानान्ता देवा बन्धका न भवन्ति । तिर्यग्द्विकोद्योतयोरप्यानतादयो न भवन्ति । [illegible] प्रायोग्यप्रकृतिदशकापर्याप्तनरकद्विकदुर्भगादित्रिकनीचैर्गोत्राप्रशस्तखगतिरूपाणा रसख्येयवर्षायुषो बन्धका न भवन्ति । अत्र पर्याप्ता युगलिनो द्रष्टव्याः, कानामन्यथा बन्धसम्भवात् । आहारकद्विकस्याविरतिप्रत्ययत उद्वलनभावात् न संक्रम , जिननाम्नस्तु यत्र सद्भाव' सम्यक्त्वाभावश्च तत्र शेषसक्रमाभावेन सभाव्यते । एवं यस्य यस्य यत् यत् कर्म गुणप्रत्ययतो भवप्रत्ययतो वा बन्ध नायाति, तस्य तत्तत् विध्यातसक्रमयोग्य भवति । अथ दलिकप्रमाणमुच्यते–यावत्प्रमाण विध्यातसक्रमेण प्रथमसमये परप्रकृतिषु क्षिप्यते, तावत्प्रमाणैर्दलिकै' शेषं सर्वमपि दलिकमङ्गुलमात्रक्षेत्रस्यासङ्ख्येयतमे भागे यावन्त [illegible] खण्डैर्निखिलमपहृत भवति । एतदुक्त भवति–यावत्प्रमाण प्रथमसमये कर्मदलिक सक्रमेण प्रकृत्यन्तरे प्रक्षिप्यते, तावत्प्रमाणे खण्डे शेष सर्वमपि तत्प्रकृतिगत यमाणमेकतस्तदेकखण्डदलिकराशि , अन्यतश्चैकाकाशप्रदेश [illegible] भागवर्त्याकाशप्रदेशैरपहियत इति क्षेत्रतो मार्गणा । [illegible] णीभिरपहृतं भवति । अयं च विध्यातसक्रम प्रायो यथाप्रवृत्तसक्रमावसाने वेदितव्य' ।

विध्यातसक्रमस्य यन्त्रम् । ( गुणप्र० भवप्र० बाऽवध्यमानाना )

| मि० नरकायुर्वर्जा १४ मिथ्यात्वान्तानाम् | सासादनादयः | गुणप्रत्ययत |
|---|---|---|
| तिर्यगायुवर्जा २४ सासादनान्ता० | मिथ्यात्व | " |
| (२)मिथ्यात्वमिश्रयो | अविरतादयः | " |

| गुणस्थाने | सवाम |
|---|---|
| मिथ्यात्वे | ०–१ |
| सासादने | [illegible] |

| | | |
|---|---|---|
| ४ था‍ तानाम् मनुष्यायुषर्चा ९ | देशविरतादयः | ,, |
| ( ४ ) ५ मा‍ तानाम् | प्रमत्तादय | ,, |
| ( ६ ) प्रमत्ता‍ तानाम् | अप्रमत्तादय | ,, |
| वै०७-देव२-नरक२-कुजाति ४ स्था०-सू०-साधा०-अपर्या०-आतपानां ( २० ) | सर्वे नारका सन त्कुमारादयो देवाश्च | भवप्रत्ययत |
| नरक२-देव२-वै०७-विकल३-सू० अपर्या०-साधा० ( १७ ) | इशानान्ता देवाः | ,, |
| तिय० २- उद्यो० पूर्वोक्ताना ( २० ) च | आनतादयो देवा | ,, |
| सघ०६-कुसस्था० ५-नपु०-मनु०२-औदा०७-ति० प्रा०१० अप०-नरक २-दुभ० ३-नीo गो०-अप्र० उद्यo (३९) | युगलिकतियञ्च नरा | ,, |

| | | |
|---|---|---|
| मिथ्ये | १८ | |
| अविरते | ४० | |
| देशविरते | ४९ | ५४ |
| प्रमत्ते | ५३ | ५८ |
| अप्रमत्ते | ५९ | ६४ |
| अपूर्वक प्र १ | १४ | |
| अपूर्वक ७ | २९ | ६५ |
| अनिवृ | २९ | ६५ |
| सूक्ष्मसं | २९ | ६५ |

साम्प्रत यथाप्रवृत्तसक्रमलक्षणमुच्यते-यथाप्रवृत्तसक्रमेण यथा यथा जघन्यमध्यमोत्कृष्टानां योगाना प्रवृत्तिस्तथा तथा सक्रमयति । इदमत्र हृदय-जघन्ययोगे वर्तमानो जघन्य कर्मदल मध्यमे मध्यममुत्कृष्टे उत्कृष्ट सक्रमयति । अय च सक्रम ससारान्तर्वर्तिना सर्वेषा प्राणिना ध्रुवबन्धिनीना बन्धे, परावर्तमानाना तु स्वस्वबन्धयोग्याना बन्धेऽबन्धे वा भवति । तत्र ध्रुवबन्धिनीनामध्रुवबन्धिनीना वा यदि तत्काले प्रभूत दल बध्यते तदा प्रभूत सक्रमयति, स्तोक बध्यते चेत् स्तोक सक्रमयति, यद्वा काश्चिदध्रुवबन्धिनीना तद्भवबन्धयोग्याना तदानीमबन्धेऽपि प्राग्बद्ध दलिक प्रभूतमास्ते तर्हि प्रभूत स्तोक चेत् स्तोक सक्रमयति । तदुक्तम्-"ससारत्था जीवा सबन्धजोगाण तद्दल-पमाणा । सकामे तणुरूव अहापवत्तीए तो नाम ॥ १ ॥" इति लक्षितो यथाप्रवृत्तसक्रम ।

यथाप्रवृत्तसक्रम' ।

| ध्रुवबन्धिनीनाम् | तद्बन्धका |
|---|---|
| तद्बन्धयोग्यपरावर्तमानाना | तद्बन्धका अबन्धका वा |
| अथ योगानुरूप सक्रम स्यात्, अस्य बाधको विध्यातो गुणसक्रमो वा भवति | |

अथ गुणसक्रमो लक्ष्यते-अपूर्वकरणादिगुणस्थानवर्तिनः प्राणिन प्रतिसमयमबध्यमानाशुभप्रकृतीना सम्बन्धि कर्मदलिकमसख्येयगुणश्रेण्या बध्यमानासु परप्रकृतिषु प्रक्षिपन्ति स गुणसक्रम', गुणेन प्रतिसमयमसङ्ख्येयगुणलक्षणेन गुणकारेण सक्रमो गुणसक्रम । कासा प्रकृतीना गुणसक्रमो भवतीत्युच्यते-नरकद्विकाद्यजातिचतुष्कस्थावरचतुष्कहुण्डसस्थानसेवार्तसहननपुसकवेदरूपाणा मिथ्यात्वयोग्याना त्रयोदशप्रकृतीना तिर्यग्द्विकस्त्यानर्द्धित्रि-

सम्यक्त्वलाभप्रथमसमयादारभ्यान्तर्मुहूर्तात्परतः गुणसंक्रमावसाने[1] विध्यातसंक्रमस्योक्त्वादन्तर्मुहूर्ताभ्यन्तरे मिश्रस्यापि गुणसंक्रम सुस्पष्ट एव । ननु द्वितीयौपशमिकसम्यक्त्वे एवमुक्तं, न तु प्राथमिकौपशमिकसम्यक्त्व इति चेत्? सत्यम्, एकत्रोक्तमन्यत्रापि संभावितमिति लक्षितो गुणसंक्रम । उद्वलनासंक्रमं कुर्वता स्वस्थानप्रक्षेपेण चरमस्थितिखण्डे यत्प्रदेशाग्रं तदन्यप्रकृतौ प्रतिसमयमसंख्येयगुणं तावत् संक्रमयति यावद् द्विचरम. प्रक्षेप । यस्तु चरमप्रक्षेप. स स सर्वसंक्रम इति प्रागुक्तमेव ।

गुणसंक्रमः ।

( अबध्यमानाशुभानामेव स्यात् )

| | |
|---|---|
| मिथ्यात्वान्तानां ११<br>अन० ४-तिर्यगायु-उद्योतवर्जं १९ सास्वादनान्तानां | ८ मादय |
| ( ८ ) मध्यकषायानाम्, अस्थिराशुभायश शोकारत्यसातानां च | ” |
| निद्रा२-उप०-कुवर्णादि ९ हास्यरतिभयकुत्सानाम् | ” |
| मिथ्या०-मिश्रानन्तानुबन्धि ४ णाम् | ४ थेतः ७ मान्ता अपूर्वकरणे त |

अथ कः संक्रम क बाधित्वा प्रवर्तत इत्युच्यते—यथाप्रवृत्तसंक्रम प्रवर्तमान स्वहेतुसामर्थ्येन बाधित्वा विध्यातसंक्रमो गुणसंक्रमो वा प्रवर्तते, तथोद्वलनासंक्रम बाधित्वा सर्वसंक्रम. प्रवर्तते, तदुक्त—"बाहिय अहापवत्त सहेउणाहो गुणो व विज्झाओ । उव्वलणसंकमस्सवि कसिणो चरमंमि खडंमि ॥ १ ॥" इति ।

इहान्योऽपि पञ्च स्तिबुकसंक्रमो विद्यते, स च न संक्रमकरणे सम्बध्यते, करणलक्षणायोगात्, करण हि सलेश्य वीर्यमुच्यते, स्तिबुकसंक्रमस्त्वयोगिनोऽपि द्वासप्ततिप्रकृतीनामुपान्त्यसमये उदयवतिषु भवति । ननूदयसत्तयो करणत्वमिव स्तिबुकसंक्रमस्यापि कथं न करणत्वमिति चेत्? न, उदयसत्तयोरपि करणत्वास्वीकारात् । ननु "बन्धुक्कट्टणकरण संकममोक्कट्टुदीरणा सत्ता । उदयुवसामणिधत्ती णिकाचणा होदि पडिपयडी ॥ १॥" व्याख्या—"बन्धत्कर्षण संक्रमोऽपकर्षणमुदीरणा सत्त्वमुदय. उपशमो निधत्तिर्निकाचनेति दश करणानि प्रतिप्रकृति प्रकृतिं प्रकृतिं भवन्ति" इति चेत्? नेयं गाथा प्रमाणपथमवतरति, कुमतिप्रणीतत्वात्, किञ्चोदयसत्तयोः करणत्वस्वीकारेऽयोग्यवस्थायामपि ते प्राप्नुयाताम्, नन्वयोग्यवस्थायां स्वीक्रियेते एवेति चेत्?, अयोग्यवस्थाया बन्धापत्ति , ननु कथं बन्धापत्तिरिति चेत्?, यत सलेश्य वीर्यं हि करणमुच्यते, यावत्करण तावद्बन्ध तथा च सत्ययोग्यवस्थाचरमसमये यद् बद्ध तत् किं मुक्तावस्थायां वेद्यते? ननु बन्धप्रयोजक सलेश्य वीर्यं, सलेश्यलेश्यन्यतरत्तु करणमिति चेत्?, तव मते स्तिबुकसंक्रमस्यातिरिक्तकरणत्वापत्तिरुदयसत्तयोरिव, तथा च सति दशैव करणानीति सूत्र विशीर्येत । न च संक्रमकरणाभ्यन्तरीभूत. स्तिबुकसंक्रम इति वाच्यम्, "संकमकरणूणा नवकरणा होंति सव्वआउण । सेसाण दस करणा अपुव्वकरणो त्ति दस करणा ॥ १ ॥ ओदिमसत्तेव तदो सुहुमकसाओत्ति संकमेण विणा । छच्च सजोगित्ति तदो

1 अपूर्वकरणादारभ्य सूक्ष्मसंपरायपर्यन्तं संक्रमं विना सप्त करणानीति ।

सत्त उदय अजोगित्ति ॥ २ ॥ णवरि निसेस जाणे सम्ममवि होति सन्तमोहम्मि । मिच्छस्स मिस्सस्स य सेसाण णत्थि संकमणं ॥ ३ ॥" इति सूत्रेणैकादशगुणस्थानं यावदेव त्वया [illegible] मस्य स्वीकारात्, स्तिबुकसङ्क्रमस्त्वयोगिन्यपि भवतीति तस्यातिरिक्तकरणत्वापत्तिः । भवन्मतेऽप्युपशान्तं यावदेव सङ्क्रमकरणप्रवृत्तिरयोग्युपान्त्यसमयं यावत् स्तिबुकसङ्क्र[illegible] वृत्तिरिति स्तिबुकसङ्क्रमस्यातिरिक्तकरणत्वापत्तिरिति चेत् ? न, अस्मन्मते [illegible] स्तिबुकसङ्क्रमस्यापि करणत्वं न स्वीक्रियते, तन्मते तूदयसत्तयोरिव तस्य [illegible] त्तिर्दुर्निवारा । न चोदये सत्तायां वाऽन्तर्भाव इति वाच्यम्, त्रयाणामपि पृथग् [illegible] त्वात्, तथाहि–उदयसमयप्राप्तानां कर्मपुद्गलानामनुभवनमुदयः, बन्धसङ्क्रमाभ्यां [illegible] लब्धात्मलाभानां निर्जरणसङ्क्रमणकृतस्वरूपप्रच्युत्यभावः सत्ता, अनुदयप्राप्तायाः सत्क [illegible] दलिकं सजातीयप्रकृतावुदयप्राप्तायां समानकालस्थितौ संक्रमयति सङ्क्रमयित्वा [illegible] स स्तिबुकः, यथा मनुजगतावुदयप्राप्तायां शेषगतित्रयमेकेन्द्रियजातौ [illegible] त्यादि, तदुक्तं पञ्चसङ्ग्रहे–"पिंडपगईण जा उदयसगया तीए अणुदयगयाओ । सकामिऊण वे[illegible] ज एसो थिबुगसंकमो ॥ १ ॥" इति, अन्यत्रापि "अनुदीर्णमुदीरणान्तस्तुल्यकालं प्रतिक्षणम् । [illegible] सङ्क्रमं याति, येन स स्तिबुको मतः ॥ १ ॥" इति । एष एव प्रदेशोदय उच्यते । स्तिबुकसङ्क्रमो न केवलमयोगिपर्यन्ते एव, सर्वासां प्रकृतीनां [illegible] विपाकोदयादन्यकाले भवत्येव, ततश्चायोगिपर्यन्ते यासां स्तिबुकेनैव [illegible] दयवतीनां स्तिबुकस्तत्र व्यपदिष्टः स अविरोध्येव ।

अथोद्वलनाप्रसङ्गे यत् चरमस्थितिखण्डमुक्तं तस्य सर्वसङ्क्रमवर्जचतुर्भिः सङ्क्रमै[illegible] ल्पबहुत्वमुच्यते–चरमस्थितिखण्डस्य गुणसङ्क्रमेणापहारकालः सर्वस्तोकोऽन्तर्मुहूर्त[illegible] त्रेण कालेन सर्वस्याप्यपहरणात्, ततो यथाप्रवृत्तसङ्क्रमापहारकालोऽसङ्ख्येयगुणो यतो [illegible] प्रवृत्तसङ्क्रमेण चरमस्थितिखण्डं पल्योपमासङ्ख्येयभागमात्रेण कालेन सर्वमप्यपहृतं भवति ततो विध्यातसङ्क्रमेणापहारकालोऽसङ्ख्येयगुणो यतस्तदेव चरमस्थितिखण्डं वि[illegible] णापह्रियमाणमसङ्ख्याताभिरुत्सर्पिण्यवसर्पिणीभिरपहृतं भवति, तत उद्वलनासंक्रमेणापहार कालोऽसङ्ख्येयगुणो [illegible] चरमस्थितिखण्डं द्विचरमस्थितिखण्डस्य चरमसमये यत्परप्रकृतौ प्रक्षिप्यते तेन मानेनोद्वलनासङ्क्रमेणापह्रियमाणमपि प्रभूताभिरसङ्ख्येयोत्सर्पिण्यवसर्पिणीभिरपहृतं भवति । विध्यातसंक्रमेणोद्वलनासङ्क्रमेण चापहारः क्षेत्रतोऽङ्गुलासङ्ख्ये०

शेषस्यापहारकालाल्पबहुत्वम् ।

| गुणसङ्क्रमेण | अन्तर्मुहूर्तं | सर्वाल्प |
| --- | --- | --- |
| यथाप्रवृत्तेन | पल्यास०भा० | ततोऽसंख्येयगुण |
| विध्यातेन | असं०कालचक्राणि | ,, |
| परस्थानोद्वलनया (उपान्त्यखण्डस्य) | बहुसं०कालचक्राणि | ,, |
| स्वस्थानोपान्त्योद्वलनया | पल्यास०भा० | यथा०कालतुल्य |
| उद्वलनायां योऽन्त्यखण्डः स शेष इति | | |

यभागेन द्रष्टव्य , केवलमुद्वलनासक्रमेणापहार बृहत्तमेनाङ्गुलासंख्येयभागेन वाच्य'। उद्व लनासक्रमे द्विचरमस्थितिखण्डस्य चरमप्रक्षेपे यत्स्वस्थाने कर्मदलिकं प्रक्षिप्यते तावत्प्रमाणं कर्मदलिक यथाप्रवृत्तसक्रमेणापह्रियमाण चरमस्थितिखण्डस्य निखिलं कर्मदलं पल्योपमासं ख्येयभागेनापहृत भवति, तावत्प्रमाणमेवोद्वलनासक्रमेणाप्यपह्रियमाण चरमस्थितिखण्ड पल्योपमासख्येयभागेनापहृत भवतीति द्वावपि स्वस्थानप्रक्षेपरूपेण तुल्यौ भवत , तदुक्त– "ज दुचरिमस्स चरिमे सपरट्ठाणेसु देइ समयम्मि। ते भागे जह कमसो अहापवत्तुव्वलणमाणे ॥ १ ॥" इति लक्षणं लक्षितम्।

अत्र कुमतिभिरुद्वलनाप्रकृतय त्रयोदश, सर्वत्र चरमस्थितिखण्डे गुणसक्रम', आहार कादिशुभप्रकृतीनामपि गुणसक्रम , सर्वसक्रमयोग्या द्वापञ्चाशत्प्रकृतय इत्यादिक यद्विपरीतं प्रलपित तद् ज्ञापनार्थं गोम्मटसारान्तर्भूतपञ्चभागहारचूलिकाया कियन्त्य गाथा सवृत्ति, का उपन्यस्यन्ते। तथाहि–

"मिच्छे सम्मिस्साण अधापवत्तो मुहुत्तअन्तोत्ति। उव्वेलण तु तत्तो दुचरिमकडोत्ति णियमेण ॥१॥ व्याख्या–मिथ्यात्वे प्राप्ते सम्यक्त्वमिश्रप्रकृत्योरध प्रवृत्तसक्रमोऽन्तर्मुहूर्तपर्यन्ते वर्तते। तु पुनरु द्वलनभागहारसक्रमो द्विचरमकाण्डपर्यन्त वर्तते नियमेन। तत्राध प्रवृत्तसक्रमः फालिरूपेण उद्वलन- सक्रम काण्डरूपेण वर्तते ॥ १ ॥ उव्वेलण पयडीण गुण तु चरिमम्मि कडये णियमा। चरमे फा लिम्मि पुणो सव्व चय होदि सक्रमण ॥ २ ॥ व्याख्या–उद्वलनप्रकृतीना द्विचरमकाण्डकपर्यन्तमुद्वल- नसक्रमण, चरमकाण्डे तु पुन नियमेन गुणसक्रमणम्। चरमफालौ पुन सर्वसक्रमण चास्ति तेन सम्यक्त्वमिश्रप्रकृत्योरुद्वलनप्रकृतित्वाच्चरमकाण्डके गुणसक्रमण चरमफाले सर्वसक्रमण च सिद्धम्। करणपरिणामेन विना सर्वपरमाणूना परप्रकृतिरूपेण निक्षेपणमुद्वलनसक्रमण नाम। विध्यातविशुद्धि कस्य जीवस्य स्थित्यनुभागकाण्डकगुणश्रेण्यादिपरिणामेष्वतीतेषु प्रवर्तनात् विध्यातसक्रमण नाम। बन्धप्रकृतीना स्वबन्धसभवविषये य प्रदेशसक्रमस्तदध प्रवृत्तसक्रमण नाम। प्रतिसमयमसख्येयगुण श्रेणिक्रमेण यत्प्रदेशसक्रमण तत् गुणसक्रमण नाम। चरमकाण्डचरमफाले सर्वप्रदेशाग्रस्य यत्सक्रमण तत्सर्वसक्रमण नाम ॥ ३ ॥ सर्वसक्रमणप्रकृतिस्थतिर्यगेकादशमाह–तिरियदुगाइचउक्क आदावुज्जोव थावरं सुहुम। साधारण च एदे तिरिये यार मुणेयव्वा ॥ ४ ॥ व्याख्या–तिर्यग्द्वयमाद्यजातिचतुष्क आतप उद्योतः स्थावरः सूक्ष्म साधारण चेत्येता एकादश तिर्यक्ष्वेवोदयात्तिर्यगेकादश इति सज्ञा स्यु ॥ ४ ॥ अथोद्वलनाप्रकृतय का इति चेदाह–आहारदुग सम्म मिस्स देवदुगणारयचउक्क। उच्च मणु दुगमेदे तेरस उव्वेलणा पयडी ॥ ५ ॥ व्याख्या–आहारकद्विक सम्यक्त्व मिश्र देवद्विक नारक चतुष्कमुच्चैर्गोत्र मनुजद्विक चेत्येतास्त्रयोदश उद्वलना नाम प्रकृतयः स्यु ॥ ५ ॥ बन्धे अधापवत्तो विज्झाद सत्तमो त्ति हु अबन्धे। एत्तो गुणो अबन्धे पयडीण अप्पसत्थाण ॥ ६ ॥ व्याख्या–प्रकृतीनां बन्धे सति स्वस्वबन्धव्युच्छित्तिपर्यन्तमध प्रवृत्तसक्रमण स्यात्, मिथ्यात्वस्य 'सम्म मिच्छं मिस्स सगुणट्ठाणम्मि णेव संकमदी'ति निषेधात्। बन्धव्युच्छित्तौ सत्यामसयताद्यप्रमत्तपर्यन्त विध्यातसक्रमण स्यात्। इतोऽपूर्वकरणगुणस्थानादुपर्युपशान्तकषायपर्यन्त बन्धरहिताप्रशस्तप्रकृतीना गुणसक्रमण स्यात्

ततोऽन्यत्रापि प्रथमोपशमसम्यक्त्वग्रहणप्रथमसमयादन्तर्मुहूर्तपर्यन्तं पुनः मिश्रसम्यक्त्वप्रकृत्योः
काले मिथ्यात्वक्षपणायामपूर्वकरणपरिणामान्मिथ्यात्वचरमकाण्डकद्विचरमफालिपर्यन्तं च
स्यात् । चरमफाल्या सर्वसंक्रमणं स्यात् ॥ ६ ॥ ताः सर्वसंक्रमणप्रकृतीराह–
संजलणलोहसम्ममीसूणा । मोहा थीणतिगं च य चावण्णे सव्वसंकमणं ॥ ७ ॥ व्याख्या–
तिर्यगेकादशोद्वलनत्रयोदशसंज्वलनलोभसम्यक्त्वमिश्रवर्जितमोहनीयानि, स्त्यानगृद्धित्रयं चेति
शत्प्रकृतिषु सर्वसंक्रमणं स्यात् ॥ ७ ॥ अथ प्रकृतीनां संक्रमनियममाह–उगुदालतीससत्तयवीसे
बारतिचउक्के । इगि चदुदुगतिगतिग चदु पण दुगदुगतिण्णि संकमणा ॥ ८ ॥ व्याख्या–
विंशत् त्रिंशत्सप्तविंशत्येकैकद्वादशत्रिचतुष्केषु क्रमेणैकचतुर्द्वित्रित्रिचतुःपञ्चद्विद्वित्रिसंक्रमा भवन्ति ॥ ८
याः प्रकृतयः तासां संक्रमणानि च क्रमशो गाथासप्तकेनाह–सुहुमस्स बन्ध घादी सादं संजलणलोह
पणिंदी । तेजदुसमवण्णचउअगुरुगपरघादउस्सास ॥ ९ ॥ सत्थगदी तसदसयं णिमिणुगुदाले अथ
पवत्तदु । थीणतिबारकसाया संढित्थी अरइ सोगो य ॥ १० ॥ व्याख्या–पञ्चचतुर्ज्ञानदर्शनावर
पञ्चान्तरायाः सातं संज्वलनलोभः पञ्चेन्द्रियं तैजसकार्मणे समचतुरस्रवर्णचतुष्कमगुरुलघुकं परघातः
उच्छ्वासः प्रशस्तविहायोगतित्रसबादरपर्याप्तप्रत्येकस्थिरशुभसुभगसुस्वरोदयपशस्कीर्तयो निर्माणं चेत्येकोन-
चत्वारिंशत्प्रकृतिष्वनुद्वेलनप्रकृतित्वात् नोद्वलनसंक्रमणम् । 'विज्झादं सत्तमो त्ति हु अबन्धे' इत्यप्रमत्त-
गुणाभ्यन्तरे बन्धच्छेदाभावात् न विध्यातसंक्रमणम् । 'एत्तो गुणो अबन्धे' इति न गुणसंक्रमणम् ।
प्रागुक्ते चावसे पाठाभावात् न सर्वसंक्रमणम्, तेनाध प्रवृत्तसंक्रमणमेकमेव स्यात्, एवं सर्वप्रकृतीनां
व्यतिरेकं विचारयेत् । मिथ्यात्वे बध्यमाने मिथ्यादृष्टावध प्रवृत्तसंक्रमणं न, कुतः, 'सगुणट्ठाणम्मि णेव
संकमदी'ति निषेधात् । पुनः स्त्यानगृद्धित्रयं द्वादश कषायाः षण्ढस्त्रीवेदौ अरतिः शोकः ॥ ९ ॥ १० ॥
तिरियेयार तीसे उव्वेलणहीणचारि संकमणा । णिद्दा पयला असुहं वण्णचउक्कं च उपघादे ॥ ११ ॥
सत्तण्हं गुणसंकममधापवत्तो य दुक्खमसुहगदी । संहदिसंठाणदसं णीचा पुण्णऽथिरछक्कं च ॥ १२ ॥
व्याख्या–तिर्यगेकादश चेति त्रिंशत्प्रकृतिषूद्वेलनवर्जितचत्वारि संक्रमणानि स्युः । पुनर्निद्रा प्रचला
अशुभवर्णचतुष्कमुपघातश्चेति सप्तसु गुणसंक्रमणमध प्रवृत्तसंक्रमणं च । असातवेदनीयमप्रशस्तविहा-
योगतिश्च विना पञ्च पञ्च संहननसंस्थानानि, नीचैर्गोत्रमपर्याप्तमस्थिराशुभदुर्भगदुःस्वरानादेयायश-
स्कीर्तयं इति ॥ ११ ॥ १२ ॥ वीसण्हं विज्झादं अधापवत्तो गुणो य मिच्छत्ते । विज्झादगुणे स
म्मे विज्झादपरिहीणा ॥ १३ ॥ सम्मविहिणुव्वेल्ले पंचेव य तत्थ होंति संकमणा । संजलणति
पुरिसे अधापवत्तो य सव्वो य ॥ १४ ॥ ओरालदुगे वज्जे तित्थे विज्झादधापवत्तो य । हस्सरदिभय
जुगुच्छे अधापवत्तो गुणो सव्वो ॥ १५ ॥ सम्मत्तूणुव्वेलणथीणतितीसं च दुक्खवीसं च । वज्जोर
लदुतित्थं मिच्छं विज्झादं सत्तसट्ठी ॥ १६ ॥ मिच्छूणिगिवीससयं अधापवत्तस्स होंति पयडीओ
सुहुमस्स बन्धघादिप्पहुदी उगुदालुरालदुगतित्थं ॥ १७ ॥ वज्ज पुसंजलणतिऊणा गुणसंकमस्स पय
डीओ । पणहत्तरि संखाओ पयडीणियमं विजाणाहि ॥ १८ ॥

अत्र किञ्चिद्विचार्यते–प्रथमगाथायां सम्यक्त्वमिश्रयोः मिथ्यात्वे बन्धयोग्यताभावेऽ
अधःप्रवृत्तसंक्रमः स्वीकृतः, द्वितीयगाथावृत्तौ बन्धप्रकृतीनां स्वबन्धसंभवविषये यः प्रदेश

संक्रमः तदधःप्रवृत्तसंक्रमणमुक्तम्, तेन षष्ठगाथाया 'बन्धे अधापवत्तो' इत्यनेन च विरोधः। द्वितीयगाथायामुद्वलनप्रकृतीनां चरमस्थितिखण्डे नियमात् गुणसंक्रमस्वीकारे आहारकादिशुभप्रकृतीनामपि गुणसंक्रमः स्यात्, तथा च सति षष्ठगाथायामबध्यमानाप्रशस्तप्रकृतीनामपूर्वकरणादौ गुणसंक्रमो भवतीति स्ववचनविरोधः स्यात्। ननु चरमस्थितिखण्डे परप्रकृतिषु प्रतिसमयमसंख्येयगुणश्रेण्या संक्रम्यमाणत्वेनोद्वलनासंक्रमस्य वक्तुमशक्यत्वेन भवतामपि गुणसंक्रमो वक्तव्यः स्यादिति चेत्, न, यथोद्वलनाया प्रथमादिस्थितिखण्डे प्रतिसमयमसंख्येयगुणं दलमुत्कीर्यमाणं स्वस्थाने प्रतिसमयमसंख्येयगुणं संक्रमयति तद्वदुद्वलनासंक्रमप्रकृतीनामपि चरमस्थितिखण्डसत्कर्मदलस्य प्रतिसमयमसंख्येयतयोद्वलनासंक्रमेण संक्रम्यमाणत्वेनास्मन्मते न कोऽपि विरोधः। द्वितीयगाथावृत्तौ 'करणपरिणामेन विना कर्मपरमाणूनां परप्रकृतिरूपेण निक्षेपणमुद्वलनासंक्रमण' मित्यत्र करणपरिणामेन विना इति यत्तु न युक्तं, संक्रमकरणस्य प्रवर्तमानत्वात्। न च यथाप्रवृत्त्यादिकरणपरिणामं विना इति वाच्यम्, विध्यातसंक्रमादौ व्यभिचारात्। विध्यातसंक्रमस्य 'भवप्रत्ययतो गुणप्रत्ययतो वा बन्धे विध्याते सति बन्धव्यवच्छेदे सति संक्रमो विध्यातसंक्रमः' इत्येव लक्षणं युक्तं न पुनः "विध्यातविशुद्धिकस्य जीवस्य स्थित्यनुभागकाण्डकगुणश्रेण्यादिपरिणामेष्वतीतेषु प्रवर्तनात् विध्यातसंक्रमः" इति, अन्यथा अजातयथाप्रवृत्तादिकरणपरिणामे जीवे विध्यातसंक्रमो न स्यात्, स्याच्च भवप्रत्ययतो गुणप्रत्ययतो वा बन्धे सत्यपि विध्यातसंक्रमस्तादृक्परिणामातीतजीवानामिति। तथा 'बन्धप्रकृतीनां स्वबन्धसंभवविषये यः प्रदेशसंक्रमः तदधःप्रवृत्तसंक्रमण' मिति वक्तव्ये भवन्मते मिश्रसम्यक्त्वयोर्मिथ्यात्वगुणस्थानेऽधःप्रवृत्तसंक्रमस्योक्तत्वेन तत्राव्याप्तिः स्यादिति। 'प्रतिसमयमसंख्येयगुणश्रेणिक्रमेण यत् प्रदेशसंक्रमणं तद्गुणसंक्रमण' मिति लक्षणस्योद्वलनासंक्रमेऽतिव्याप्तिः, तत्रापि स्वस्थाने प्रतिसमयमसंख्येयगुणश्रेण्या संक्रम्यमाणत्वादिति। अन्यास्वप्यन्यस्तासु गाथासु यद्वैपरीत्यं तद्बुद्धिमद्भिः स्वयमेवावलोकनीयम्, सुगमत्वान्नोच्यते। एवमन्यदपि पञ्चभागहारचूलिकाया दशकरणचूलिकाया च बहुविचारणीयं विद्यते, तथापि ग्रन्थभूयस्त्वभयात् नोच्यते।

अथ प्रदेशसंक्रमस्य साद्यादिनिरूपणं क्रियते, तत्र मूलप्रकृतीनां परस्परं संक्रमाभावेन साद्यादिप्ररूपणा न वाच्या, उत्तरप्रकृतीनां तु साद्यादिप्ररूपणा वाच्या, तथाहि नीचैर्गोत्रवेदनीयद्विकमिथ्यात्ववर्जशेषपड्विंशत्युत्तरशतसंख्यानां ध्रुवसत्त्वप्रकृतीनामजघन्यप्रदेशसंक्रमश्चतुर्धा, तद्यथा–सादिरनादिर्ध्रुवोऽध्रुवश्च। तत्र वक्ष्यमाणं क्षपणार्थमभ्युद्यतः क्षपितकर्मांशः सर्वासामपि प्रकृतीनां जघन्यप्रदेशसंक्रमं करोति, स च सादिरध्रुवश्च। ततोऽन्यः सर्वोऽप्यजघन्यः प्रदेशसंक्रमो भवति। स चोपशमश्रेण्यां बन्धव्यवच्छेदे न भवति, ततः प्रतिपाते च भवतीति सादिः, तत्स्थानमप्राप्तस्यानादिः, ध्रुवाध्रुवावभव्यभव्यापेक्षया। ज्ञानावरणान्तरायदशकदर्शनावरणचतुष्कौदारिकसप्तकवर्जपञ्चोत्तरशतप्रकृतीनामनुत्कृष्टप्रदेशसंक्रमश्चतुष्प्रकारो भवति, तद्यथा–सादिरनादिर्ध्रुवोऽध्रुवश्चेति। तत्र सर्वासामपि प्रकृतीनां गुणित

प्रदेशसंक्रमस्य साद्यादिभङ्गयन्त्रम् ।

| प्रकृतयः | अजघन्यः | | | | जघन्यः | | | | अनुत्कृष्टः | | | | उत्कृष्टः | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| | सादि | अध्रुवः | अना० | ध्रुवः | सादि | अध्रुवः | अना० | ध्रुवः | सादिः | अध्रुवः | अना० | ध्रुव० | सादिः | अध्रु० | अना० | ध्रुव |
| अनन्तरोक्त २१ वर्जं १०५ ध्रुव सत्ताकानां | उप० श्रे० तः पतितानाम् | भव्यानाम् | साद्य प्राप्तानां | अभव्यानाम् | क्षपणोद्यतगुणितकर्मांशानाम् | सादित्वात् | — | — | उप० श्रे० तः पतितानाम् | भव्यानाम् | साद्य प्राप्तानाम् | अभव्यानाम् | क्षपणोद्यतगुणितकर्मांशानाम् | सादित्वात् | — | — |
| ज्ञाना० ५-दर्श० ४-वि० ५-औ० स० ७ (२१) ध्रु० सत्ताकानां | ,, | ,, | ,, | ,, | ,, | ,, | — | — | गुणितकर्मांशमिथ्यादृशाम् कादाचित्कत्वात् | सादित्वात् | — | — | गुणितकर्मांशमिथ्यादृशां कादाचित्कत्वात् | ,, | — | — |
| शेषाणाम् (२८) | अध्रुवसत्ताकत्वात् | अध्रु० | — | — | अध्रुवसत्ता० | अध्रु० | — | — | अध्रु० सत्ताकत्वात् | अध्रु० | — | — | अध्रुवसत्ताकत्वात् | अध्रुव० | — | — |
| मिथ्यात्वस्य | पतद्ग्रहाध्रौव्यत्वात् | पतद्० | — | — | पतद्० | पतद्० | — | — | पतद्० | पतद्० | — | — | पतद्० | पतद्० | — | — |
| नीचै—साता—असातानाम् | परावर्तमानत्वात् | परा० | — | — | परा० | परा० | — | — | परा० | परा० | — | — | परा० | परा० | — | — |

कर्मांशे क्षपणार्थमभ्युद्यते उत्कृष्टप्रदेशसंक्रमः प्राप्यते इत्युत्कृष्टप्रदेशसंक्रमः सादिरध्रुवश्च । ततोऽन्यत्र सर्वोऽप्यनुत्कृष्टः, स चोपशमश्रेण्यां व्यवच्छिद्यते, ततः प्रतिपाते च पुनरपि भवतीति सादिः, तत्स्थानमप्राप्तस्यानादि, ध्रुवाऽध्रुवावभव्यभव्यापेक्षया। पञ्चोत्तरशतस्य जघन्य उत्कृष्टश्च, ज्ञानावरणाद्येकविंशतिप्रकृतीनां च जघन्योत्कृष्टानुत्कृष्टा विकल्पाः सादयोऽध्रुवाश्च । तत्र पञ्चोत्तरशतप्रकृतीना जघन्य उत्कृष्टश्च साद्यध्रुवतया भावित एव । ज्ञानावरणादीना चोत्कृष्टप्रदेशसक्रमो गुणितकर्मांशे मिथ्यादृष्टौ कदाचिदेव भवति, शेषकालं त्वनुत्कृष्ट इत्येतौ द्वावपि साद्यध्रुवौ । जघन्यस्तु साद्यध्रुवतया भावित एव । मिथ्यात्वस्य ध्रुवसत्कर्मत्वेऽपि प्रतिग्रहप्राप्तेरध्रौव्यात् नीचैर्गोत्रस्य वेदनीयद्विकस्य च परावर्तमानत्वात् शेषप्रकृतीना चाध्रुवसत्कर्मत्वाच्च चत्वारोऽपि विकल्पाः सादयोऽध्रुवाश्च भवन्तीति कृता साद्यादिप्ररूपणा ।

अथ स्वामित्वमुच्यते–तद्द्विविधमुत्कृष्टप्रदेशसक्रमस्वामित्वं जघन्यप्रदेशसक्रमस्वामित्वं च। उत्कृष्टप्रदेशसक्रमस्वामित्व च गुणितकर्मांशे प्राप्यत इति गुणितकर्मांशस्यैवादौ स्वरूप मुच्यते। य उत्कटयोगकाषायिक आयुर्बन्धकाले नित्य जघन्ययोगेनायुर्बध्नन् बादरत्रसकायिककायस्थितिकालन्यूना सप्ततिसागरोपमकोटाकोटिं यावत् बादरपृथिव्यां तत्रापि पर्याप्तेषु दीर्घकालमपर्याप्तेषु स्तोककालमुपित्वोपरितनीषु स्थितिषु प्रभूत निषेकं कृत्वा च ततो निर्गत्य त्रसेषु निजकायस्थिति यावत् प्राग्वदुषित्वा तत्रापि यावतो वारान् सप्तमीं नरकावनिं गन्तुम र्हस्तावतो वारान् तत्र गत्वान्तिमे भवे सप्तमपृथ्वीनारकत्वेन वर्तमानः सर्वलघुपर्याप्तकोऽनेकश प्राप्तोत्कटयोगकषायोऽन्तिमान्तर्मुहूर्तं यवमध्यमयोगस्थानानामुपरि वर्तमान' त्रिचरमद्विचरमसमये उत्कटकाषायिक चरमद्विचरमसमये उत्कटयोगी स गुणितकर्मांशो भवति। तदुक्त कर्मप्रकृतौ–"जो बायरतसकालेणूण कम्मट्ठिइ [illegible] पुढवीए। बायरपज्जत्तापज्जत्तगदीहेयरद्धासु ॥ १ ॥ जोगकसायउक्कसो बहुसो णिच्चमवि आउबन्ध च। जोगजहण्णेणुवरिल्लट्ठिइणिसेग बहु किच्चा ॥ २ ॥ बायरतसेसु तक्कालमेवमते य सत्तमखिईए। सव्वलहु पज्जत्तो जोगकसायाहिओ बहुसो ॥ ३ ॥ जोगजवमज्झउवरिं मुहुत्तमच्छित्तु जीवियवसाणे। तिचरमदुचरिमसमए पूरित्तु कसाय उक्कस ॥ ४ ॥ जोगुक्कस चरमदुचरिमे समए य चरिमसमयम्मि। सपुण्णगुणियकम्मो पगय तेणेह सामित्ते ॥ ५ ॥" व्याख्या–"यो बादरत्रसाना द्वीन्द्रियादीना, तेजोवायुकायिकरूपसूक्ष्मत्रसव्यवच्छेदार्थं बादरग्रहणम्, कालेन पूर्वकोटिपृथक्त्वाभ्यधिकसागरोपमसहस्रद्वयप्रमाणेन कायस्थितिकालेनोना कर्मस्थितिं मोहनीयकर्मस्थितिं सप्ततिसागरोपमकोटाकोटिप्रमाणा यावत् पृथिव्या बादरे बादरपृथिवीकायभवेषु स्थित्वा। कथ स्थितेत्याह—पर्याप्तापर्याप्तयोर्दीर्घेतराद्धे, सप्तमी द्वितीयार्थे, दीर्घाद्धा पर्याप्तभवेषु इतराद्धा स्तोकाद्धामपर्याप्तभवेषु प्रभूतेषु पर्याप्तभवेषु स्तोकेषु चापर्याप्तभवेषु स्थित्वेत्यर्थः। तथा बहुशोऽनेकवारं योगकषायोत्कृष्ट उत्कृष्टेषु योगस्थानेषु उत्कृष्टेषु च काषायिकेषु सक्लेशपरिणामेषु स्थित्वेत्यर्थः। इह शेषैकेन्द्रियेभ्यो बादरपृथिवीकायिकः प्रभूतायुष्कस्तेनाव्यवच्छिन्न तस्य प्रभूतकर्म पुद्गलोपादान बलवत्तयाऽतीव वेदना सहिष्णुतया च तस्य प्रभूतकर्मपुद्गलपरिशाटाभाव, असहिष्णुरेव वेदनाकरालितस्तदा तथा प्रयोगेण प्रभूतकर्मपुद्गलान् परिशाटयतीत्येवमालोच्य बादरपृथिवीकायिकग्रहण कृतम्। अपर्याप्तभवग्रहण च परिपूर्णकायस्थितिपरिग्रहाय, तेषा चापर्याप्तकभवाना स्तोकानपर्याप्तकभवाना च प्रभूताना ग्रहण प्रभूतकर्मपुद्गलपरिशाटाभावख्यापनाय, अन्यथा हि निरन्तरोत्पद्यमानम्रियमाणेषु बहुपुद्गलपरिशाटो लभ्यते, न च तेनेह प्रयोजनम्। उत्कृष्टेषु योगस्थानेषु च वर्तमानः प्रभूत कर्मदलिकमादत्ते, उत्कृष्टसक्लेशपरिणामश्चोत्कृष्टा स्थितिं बध्नाति, प्रभूतमुद्वर्तयति, स्तोक चापवर्तयतीति योगकषायोत्कृष्टग्रहणम्। तथा नित्य सर्वकाल भवे भवे जघन्ययोगे वर्तमानः तेनायुर्बन्ध कृत्वा, उत्कृष्टे ह्यायु प्रायोग्ये योगे वर्तमान प्रभूतायु पुद्गलानादत्ते, उत्कृष्टेन योगेन प्रभूतानायु पुद्गलानाददानश्च तथास्वाभाव्यात् ज्ञानावरणीयस्य प्रभूतान् पुद्गलान् परिशाटयति, न च तेनेह प्रयोजनमिति जघन्ययोगग्रहणम्। तथोपरितनीषु स्थितिषु निषेक कर्मदलिकन्यास बहु स्वभूमिकानुसारेणातिप्रभूत कृत्वा एव बादरपृथ्वीकायिकेषु बादरत्रसकायिकस्थितिन्यूना सप्ततिसाग

ोपमकोटाकोटी। समुद्धृत्य ततो निर्गच्छति, निर्गत्य च बादरत्रसकायेषु द्वीन्द्रियादिषु
बादरत्रसेषु चैव प्रभूतलोकपर्याप्तापर्याप्तभवावस्थानादुपरितना स्थितिबहुनिषेककरणान्ते
त्वाउ बादरत्रसकायस्थितिकालं पूर्वकोटिपृथक्त्वाभ्यधिकसागरोपमसहस्रद्वयप्रमाणं परिभ्रमणेन स
यावतो वारान् सप्तमीं नरकावनिं गन्तुमर्हस्तावतो वारांस्तत्र गत्वान्तिमे भवे सप्तमपृथ्वीनार
त्वेन वर्तमान इह दीर्घजीवित्वं योगकषायोत्कटता च लभ्यत इति यावत्सम्भवं सप्तमनरक
र्यागमनग्रहणम् । तथा सप्तमक्षितौ नारकभवे सर्वेभ्योऽप्यन्येभ्यो नारकेभ्यो लघु शीघ्र
पर्याप्तभावमुपगतः । इहापर्याप्तापेक्षया पर्याप्तोऽसंख्येयगुणयोगो लभ्यते । तथा च
कर्मपुद्गलोपादानसम्भवः, तेन चेह प्रयोजनमिति सर्वलघुपर्याप्त इत्युक्तम् । बहुशोऽनेकवारं
त्यमतमनरकपृथ्वीनारकभवेऽपि योगकषायाधिको भूत्वा उत्कृष्टानि योगस्थानान्युत्कृष्टांश्च का
कान् परिणामविशेषान् गच्छतीत्यर्थः । योगयवमध्यस्याष्टसामायिकानां योगस्थानानामुपरि
मुहूर्तं जीवितावसाने स्थित्वाऽन्तर्मुहूर्तावशेषे आयुषि योगयवमध्यस्योपरि असंख्येयगुण
मुहूर्तं यावत्पर्याप्तो भूत्वेत्यर्थः । भवस्य त्रिचरमे द्विचरमे च समये वर्तमानः उत्कृष्ट
संक्लेशस्थानं पूरयित्वा त्रयः समयाश्चरमा यस्मात् यत आरभ्यान्तिमः समयस्तृतीयो भव
यावत् स त्रिचरमः । एवं द्वौ चरमौ यस्मात् स द्विचरम इति व्युत्पत्तिः । चरमे द्विचरे
समये योगस्थानमपि चोत्कृष्टं पूरयित्वा इहोत्कृष्टो योग उत्कृष्टश्च संक्लेशो युगपदेकमेव समय
प्राप्यते नाधिकमिति विषमसमययोर्द्वयोरुत्कृष्टयोगोत्कृष्टकषायस्थानग्रहणम् । त्रिचरमे द्विचरमे च
उत्कृष्टसंक्लेशग्रहणं प्रभूतोद्वर्तनाल्पापवर्तनासम्पत्तये । द्विचरमे चरमे च समये उत्कृष्टयोग
सम्पूर्णप्रदेशोपचयसम्भवाय । एवं कृत्वा नारकभवस्य चरमसमये सम्पूर्णगुणितकर्मांशः सम्पद्यते
च सम्पूर्णगुणितकर्मांशेनेहोत्कृष्टप्रदेशसंक्रमस्वामित्वे प्रकृतमधिकृतम्" इत्यभिहितो गुणितकर्मा

अथोत्कृष्टप्रदेशसंक्रमस्वामित्वमुच्यते—तत्र ज्ञानावरणपञ्चकदर्शनावरणचतुष्का
यपञ्चकौदारिकसप्तकरूपाणामेकविंशतिप्रकृतीनां गुणितकर्मांशः सप्तमनरकादुद्धृत्य
न्द्रियतिर्यक्षु मध्ये समुत्पन्नः तिर्यग्भवस्य प्रथमावलिकाचरमसमये उत्कृष्टप्रदेश
करोति, यत एतासां प्रकृतीनां नारकभवचरमसमये उत्कृष्टयोगेनातिप्रभूतं कर्मद
गृहीतं तदावलिकातिक्रान्तं संक्रम्यते, अन्यत्रोक्तप्रक्रियालभ्यं न लभ्यत इति ।
द्विकासातवेदनीयप्रथमवर्जसंहननपञ्चकप्रथमवर्जसंस्थानपञ्चकाशुभवर्णादिनवकोपघात
दसंज्ञगत्यपर्याप्तास्थिराशुभदुर्भगदुःस्वरानादेयायशःकीर्तिनीचैर्गोत्ररूपाणां द्वात्रिंशत्प्र
नां गुणितकर्मांशः क्षपकश्रेण्यामारूढः सूक्ष्मसम्परायचरमसमये उत्कृष्टप्रदेश
करोति । मध्यमकषायाष्टकस्त्यानर्द्धित्रिकतिर्यग्द्विकविकलेन्द्रियजातिसूक्ष्मसाधारण
पायपङ्करूपाणां चतुर्विंशतिप्रकृतीनां स्वस्वचरमप्रक्षेपेऽनिवृत्तिबादरः क्षपकः गुणि
मांशः उत्कृष्टप्रदेशसंक्रमं करोति । तथा नरकादुद्धृत्यानन्तरभवे समागतः
प्रसमयादारभ्योत्कृष्टबन्धकालं यावत्सातवेदनीयं बद्ध्वा ततोऽसातवेदनीयं बध्नाति,
तवेदनीयबन्धावलिकाचरमसमये सातवेदनीयं सकलमपि बन्धावलिकातीतं भ

बध्यमानेऽसातवेदनीये यथाप्रवृत्तसंक्रमेण सातस्योत्कृष्टप्रदेशसंक्रमं करोति । मिथ्यात्वमिश्रयो क्षपक स्वस्वचरमप्रक्षेपे सर्वसंक्रमेणोत्कृष्टप्रदेशसंक्रमं करोति । सप्तमपृथिव्यामन्तर्मुहूर्तावशेषे आयुषि वर्तमानमौपशमिकं सम्यक्त्वं समुत्पाद्य मिथ्यात्वमिश्राभ्यां दीर्घेण गुणसंक्रमकालेन सम्यक्त्वमोहनीयं समापूर्य तत पतितश्च मिथ्यात्वं गत प्रथमसमये एव सम्यक्त्वमोहस्य मिथ्यात्वे उत्कृष्टप्रदेशसंक्रमं करोति । अनन्तानुबन्धिनां तु गुणितकर्मांशः सप्तमक्षितितो निर्गत्य तिर्यक्षु समुत्पन्नस्तत्रापि प्राप्तवेदकसम्यक्त्व विसंयोजक' चरमप्रक्षेपे सर्वसंक्रमेणोत्कृष्टप्रदेशसंक्रमं करोति । गुणितकर्मांश ईशानदेव सक्लेशे वर्तमान एकेन्द्रियप्रायोग्यं बध्नन् पुन पुनर्नपुंसकवेदं बद्ध्वा ततश्च्युत सन् स्त्री वा पुरुषो वा जात, तत्राष्टवर्षमासपृथक्त्वाभ्यधिके वर्तमानो वर्षवर क्षपयन् निजचरमप्रक्षेपे सर्वसंक्रमेण संक्रमयन् गुणितकर्मांशो वर्षवरस्योत्कृष्टप्रदेशसंक्रमस्वामी भवति । अयमेव स्थावरैकेन्द्रियातपोद्योतानामपि संक्रमस्वामी । तथा भोगभूमिषु असंख्येयवर्षाणि यावत् भूयो भूय' स्त्रीवेदं बद्ध्वा प्रकृत्यन्तरदलिकसंक्रमेण चापूर्य पल्योपमासंख्येयभागातिक्रान्ते सत्यकालमृत्युना मृत्वा दशवर्षस्थितिको देवो जातस्तत्रापि स्त्रीवेदं बन्धेन संक्रमेण चापूर्य ततश्च्युत्वा मनुजेषु मध्येऽन्यतरवेदयुत समुत्पन्न, तत्र शीघ्रं क्षपणायोत्थित स्त्रीवेदक्षपणचरमसमये सर्वसंक्रमेण स्त्रीवेदं संक्रमयन् गुणितकर्मांश स्त्रीवेदस्योत्कृष्टप्रदेशसंक्रमस्वामी भवति । अत्र नान्या युक्तिरन्वेषणीया, केवलवेधसस्तथैवोपलम्भात्, एवमन्यत्रापि यथायोग वाच्यम् । तथा कश्चित् गुणितकर्मांश ईशानदेवलोके सक्लेशपरिणामेन प्रभूत काल यावत् नपुंसकवेदं बन्धेन संक्रमेण चापूर्य ततश्च्युत्वा संख्येयवर्षायुष्केषु समुत्पन्नस्ततो निर्गत्यासंख्येयवर्षायुष्केषु समुत्पद्यासंख्येयानि वर्षाणि यावत् तथाविधसंक्लेशवशात् स्त्रीवेदं बन्धेन संक्रमेण चापूर्य तत विशुद्धपरिणामेन सम्यक्त्वं समुत्पाद्यासंख्येयानि वर्षाणि यावत् बन्धेन संक्रमेण च पुरुषवेदं समापूर्य तत. पल्योपमासंख्येयभागमात्रं सर्वायुष्ककालं जीवित्वा पर्यन्ते च मिथ्यात्वं गत्वा दशवर्षसहस्रपरिमितं देवायुष्कं बद्ध्वा देवेषु समुत्पन्न सन्नन्तर्मुहूर्तेन कालेन सम्यक्त्वं प्रतिपद्यते । तत्रापि पुरुषवेदं बन्धेन संक्रमेण च समापूर्य ततश्च्युत्वा मनुजेषु समागत्य सप्तमासाभ्यधिके वर्षाष्टकेऽतिक्रान्ते शीघ्रं क्षपणाय समुत्थित गुणसंक्रमेण चोपचितं पुरुषवेदं क्षपयन् चरमसमये सर्वसंक्रमेण संक्रमयन् पुरुषवेदस्योत्कृष्टप्रदेशसंक्रमस्वामी भवति, नावलिकाद्विकबद्धस्यान्ते, यतस्तत्र स्तोकमिति हेतो । तथा पुरुषवेदोत्कृष्टप्रदेशसंक्रमस्वामी एव सञ्ज्वलनक्रोधमानमायानामुत्कृष्टप्रदेशसंक्रमस्वामी स्वस्वचरमप्रक्षेपे वाच्य, शेषं सर्वं पुरुषवेदवद्वाच्यम् । तथा गुणितकर्मांशोऽनेकभवभ्रमणेन चतुरो वारान् मोहनीयमुपशमय्य तत शीघ्रं क्षपकश्रेणिं प्रतिपन्न सञ्ज्वलनलोभस्यान्तरकरणादारत उत्कृष्टप्रदेशसंक्रमं करोति, न परत, तदुक्तं पञ्चसङ्ग्रहवृत्तौ—"लोभस्या तरकरणादारत संक्रमो, न परतोऽस्ति" इति, परत चारित्रमोहप्रकृतीनामानुपूर्व्या सङ्क्रमात् । यत्तु—"लोभसञ्जलणाए अन्तरकरणस्स चरिमसमए, परतो संकमो णत्थि त्ति मध उक्कोसो पदेससंकमो

भवति' इति कर्मप्रकृतिचूर्णावुक्त तत्रान्तरकरणस्य चरमसमयेऽन्तरकर
समय इत्यर्थोऽवसीयते, 'अन्यथाऽन्तरकरणमि कए चरित्तमोहेणुपुव्विसंकमण'मिति
धापत्ते । एवं वृत्तिद्वये पञ्चसङ्ग्रहबृहद्वृत्तौ च वाच्यम् ।
िंशत्प्रकृतिबन्धव्यवच्छेदसमये उत्कृष्टप्रदेशसङ्क्रमस्वामी भवति, परतो यश कीर्ते
माभावात् । अत्रोपशमश्रेणिग्रहण द्वयोरपि गुणसङ्क्रमेण प्रभूतदललाभार्थम् ।
परिभ्रमता चतुरो वारानेन मोहमुपशमयति, न पञ्चममपि वारमत उक्त चतुरो
न्मोहनीयमुपशमय्येति । तैजससप्तक ... प्रशस्तवर्णगन्धरस ...
घुस्निग्धोष्णागुरुलघुनिर्माणरूपाणा विंशतिप्रकृतीना चतु कृत्वो मोहन
बन्धव्यवच्छेदादूर्ध्वमावलिकायाः परत यशःकीर्त्तौ ...
भवति । आवलिकाया अभ्यन्तरे तु बन्धान्तसमये गुणसङ्क्रमेण सङ्क्रान्तस्य
न्तरदलिकस्यावलिकानतिक्रमेणोत्कृष्टप्रदेशसङ्क्रमो न भवति । एवमेवाध्रुवबन्धिन्योः
शुभयोरपि वाच्यम् । सम्यग्दृष्टिशुभध्रुवबन्धिन्य
च्छ्वासप्रशस्तविहायोगतित्रसचतुष्कसुभगत्रिकरूपा द्वादश प्रथमसहननयुता
कसागरोपमशतोपचिता उत्कृष्टप्रदेशसङ्क्रमयोग्या भवन्ति ।
माणि यावत् सम्यक्त्वमनुपालयन्नेता बध्नाति, ततोऽन्तर्मुहूर्तं मिश्रभावमनुभूय भूय
सम्यक्त्व प्रतिपद्य तदनुभवन् द्वितीयवार षट्षष्टिसागरोपमाणि यावदेता
ध्नाति, तदेव द्वात्रिंशदधिकशतसागरोपम यावत् सम्यग्दृष्टिरेता द्वादश बन्धेन
मेण चापूर्य प्रथमसहननं तु मनुजभवहीन यथासभवमुत्कृष्टकालमापूर्यापूर्वकरणे
व्यवच्छेदादूर्ध्वमावलिकामात्रं कालमतिक्रम्य यश कीर्त्तौ सङ्क्रमयन् ...मुत्कृष्टप्र
सङ्क्रमस्वामी भवति, तदानीं गुणसङ्क्रमेण लब्धदलिकस्यापि सङ्क्रमावलिकान्तत्वेन
मभावात् । आद्यसहननस्य तु गुणसङ्क्रमाभावेन देवभवात् च्युत सन्
देवगतिप्रायोग्यं बध्नन् आवलिकामात्रं कालमतिक्रम्योत्कृष्टप्रदेशसङ्क्रमस्वामी भव
तथा सप्तसु पूर्वकोट्यायुष्केषु तिर्यग्भवेषु पुन पुनर्नरकद्विक बध्नाति, ततोऽष्टमे
मनुजो भूत्वा क्षपकश्रेणिमारूढः नरकद्विक सङ्क्रमयन् चरमप्रक्षेपे
प्रदेशसङ्क्रमो भवति । कर्मप्रकृतिचूर्णौ तु—"णिरयदुगाति णिरयगतिणिरयाणुपुव्वीण
पदेससङ्कमो भवति, कह भ०, कम्मभूमिं मोत्तूण अण्णहिं एतेसिं बन्धो णत्थि
लेसेण पुव्वकोडिपुहुत्त पूरेत्तु सव्वेन्वस्स" इत्येवमुक्तम् । देवद्विक वैक्रियसप्तक च
शक यावत् बन्धेन सङ्क्रमेण चापूर्याष्टमे भवे क्षपकश्रेणिमारूढ
रमावलिकामतिक्रम्य यदा यश कीर्त्तौ सङ्क्रामति तदोत्कृष्टप्रदेशसङ्क्रमो भवति ।
मेण लब्धकर्मदलसङ्क्रमलाभार्थं सङ्क्रमावलिकामतिक्रम्येत्युक्तम् । कर्मप्रकृति चूर्णौ
टिपृथक्त्व सामान्येनोक्त, पञ्चसग्रहमूलवृत्तौ तु "तीर्थकराहारकाणा देवद्विकस्य
स्थिरशुभयोश्च शुभध्रुवबन्धिनीना च तैजससप्तकशुभवर्णैकादशकागुरुलघुनिर्माणाख्याना तथेति

णाचतुरुपशामकस्य स्वबन्धावलिकापरत आसा यत्र कीर्त्युत्कृष्टप्रदेशसक्रमो भवती" त्युक्तम् । तथा सप्तमपृथिव्या वर्तमानश्चतुर्थगुणस्थाने अपर्याप्तान्तर्मुहूर्तन्यून त्रयस्त्रिंशत्सागरोपम यावत् मनुजद्विक बद्ध्वा चरमेऽन्तर्मुहूर्ते मिथ्यात्व गतस्तन्निमित्त तिर्यग्द्विक बध्नाति । ततो निर्गत्य तिर्यक्षूत्पत्तिप्रथमसमये गुणितकर्मांशो यथाप्रवृत्तसक्रमेण बध्यमाने तिर्यग्द्विके मनुजद्विकस्योत्कृष्टप्रदेशसक्रम करोति । ननु मिथ्यात्वगमनानन्तरमावलिकाचरमसमये मनुजद्विकस्योत्कृष्टप्रदेशसक्रम कथं न करोति? न च मिथ्यात्वभवनप्रथमसमये कथमुत्कृष्टप्रदेशसक्रम न करोतीति वाच्यम्, चरमसमयबद्धदलिकस्यावलिकानतिक्रमेण सक्रमाभावात् नोत्कृष्टसक्रम' प्राप्यत इति चेत्, अत्रोच्यते, सप्तमपृथिव्या मिथ्यात्वे वर्तमानो विध्यातसक्रमेण मनुजद्विक सक्रामति न यथाप्रवृत्तसक्रमेण, यथाप्रवृत्तसक्रमापहारकालात् विध्यातसक्रमापहारकालोऽसख्येयगुण, तदुक्त–"सेसस्स दलियस्स (उद्वलनसक्रमोपचरमखण्डदलस्य) अहापवत्तेण अवहारकालो असखेज्जगुणो अगुलसेढीए प्रदेसक्षसखेज्जतिभागोत्ति काउ" इति । ननु मिथ्यात्वेऽपि नरद्विकस्य बध्यमानत्वेन कथं न यथाप्रवृत्तसक्रम इति चेत्? सत्यम्, नवर सप्तमपृथिव्या मिथ्यात्वे वर्तमानस्तथास्वाभाव्यात् मिथ्यात्वप्रत्ययेन तिर्यग्द्विकमेव बध्नाति, न मनुजद्विकमिति । तथाहारकसप्तक तीर्थकरनाम च स्थिरसम वाच्यम्, केवल स्वोत्कृष्टबन्धकाल यावदुपचय कृत्वेति । तत्राहारकसप्तकस्य देशोनपूर्वकोटि यावत्सयममनुपालयतो यावानप्रमत्तकालस्तावत्सर्वोऽपि बन्धकालोऽवसेय । जिननाम्नो देशोनपूर्वकोटिद्वयाधिकत्रयस्त्रिंशत्सागरोपम यावत् बन्धकालो वाच्य । तथा य कश्चिद् भवद्वयेन चतुष्कृत्वो मोहनीयमुपशमयन् तत्र चोच्चैर्गोत्र बध्नन् नीचैर्गोत्र गुणसक्रमेण सक्रमयति, तृतीयभवे च मिथ्यात्व गत सन् नीचैर्गोत्र बध्नन् तत्रोच्चैर्गोत्र सक्रमयति, भूय सम्यक्त्व समासाद्योच्चैर्गोत्र बध्नन् तत्र नीचैर्गोत्र सक्रमयति, एव भूयो भूय परावृत्त्योच्चैर्गोत्र नीचैर्गोत्र च बध्नन् लघु सिद्धिं गन्तुकामो नीचैर्गोत्रबन्धान्तसमये उच्चैर्गोत्रस्य बन्धेन गुणसक्रमेण चोपचितीकृतस्योत्कृष्टप्रदेशसक्रम करोतीत्युक्तमुत्कृष्टप्रदेशसक्रमस्वामित्वम् ।

उत्कृष्टप्रदेशसक्रमस्वामिनः ।

| ज्ञाना० ५-दर्श० ४-विघ्न ५-औदा० ७ (२१) | सप्तम्या उद्वृत्त पर्या० पञ्चे० प्राप्ततिर्यग्भवो गुणितकर्मांश प्रथमावलिका त्यसमये ( नारकभवा त्यसमयबद्धमप्यत्र सक्रामतीति ) |
|---|---|
| निद्रा २-असात-अनाद्यसस्थानसहननानि १०-कुवर्णादि ९-उपघा०-कुखग०-अपर्या०-अस्थिरादि ६-नी० (३२) | १० मान्ते गुणितक्षपका |
| मध्यकषाय ८-स्त्यान० ३-तिर्य०२-विकल ३-सू०-साधा०-६ नोक०(२४) | ९ मे गुणितक्षपका स्वस्वचरमप्रक्षेपे |

| | |
|---|---|
| सातस्य | नरकादागत्य प्रथमसमयादुत्कृष्टबन्धकालेन सातं बद्ध्वा असात असातस्य बन्धाव० अन्त्यसमये |
| मिथ्यात्वमिश्रयोः | क्षपक स्वचरिमप्रक्षेपे ( सर्वसंक्रमेण ) |
| सम्यक्त्वस्य | सप्तम्यामन्तर्मु० शेषे औप० सम्य० लब्ध्वा दीर्घगुणसंक्रमेण आपूर्य पुनर्मिथ्यात्वं प्राप्ताः प्रथमसमये |
| अनन्तानुबन्धि ४ णाम् | सप्तम्यामन्तर्मु० शेषे चरमावश्यकानि कृत्वाऽनन्तरभवे सम्यक्त्व अनन्ता० नाम् विसंयोजका चरमप्रक्षेपे ( सर्वसंक्रमेण ) |
| ख्या० प्रत्या० उद्यो० पु० नपुंसकानाम् | गुणितेशान एके० प्रायो० नपुंसक भूयोभूयो बन्ध्वाऽनन्तरभवे स्त्री पुरुषो वा शीघ्रक्षपणोद्यत चरमप्रक्षेपे ( सर्वसं० ) |
| स्त्रीवेदस्य | पुन पुनर्युगलिकभवेन स्त्रीवेद बद्ध्वाऽऽपूर्य च पल्यास० भागे क्रान्ते अकालेन मृत्वा जघ० स्थितिकदेवो भूत्वा तत्रापि स्त्रीवेदेन मनुष्यत्व लब्ध्वा शीघ्रक्षपणायोद्यतस्य चरमप्रक्षेपे ( |
| पुरुषवेदस्य | ईशाने नपुंसकमापूर्य संख्येयायुषि गत्वा असंख्येयायुषि गत्वा च पूर्वासंख्येयवर्षाणि प्राप्तसम्यक्त्वेन पुंवेदमापूर्य पुनर्मिथ्यात्व जघ० स्थितिदेवत्वेनोत्पद्यान्तर्मुहूर्त्तात् सम्यक्त्व प्राप्य शीघ्रक्षपणायोद्यतस्य ( च० प्र० सर्वसं० ) |
| संज्वलनक्रोधमानमायानाम् | क्षपणकाले पुंवेदोत्कृ० प्र० स० स्वामिनाम् |
| सं० लोभयशसो | चतुर्मोहोपशम कृत्वा शीघ्रक्षपकाणां ( च० प्र० सं० स० ) |
| सं० ७-अगु०-निर्माण-शुभवर्णादि ११ (२०) स्थिर-शुभयोश्च , | चतुर्मोहोपशम कृत्वा बन्धविच्छेदादावलिकापरत पतासि |
| पंचे०-समच०-परा०-उच्छ्वास-सुखग० त्रसादि ४-सुभगादि ३ (१२) | १३२ सागराणि यावत् सम्य० कालेनापूर्य ८ मे लिकापरतः यशसि प्रक्षेपक |
| वज्रर्षभस्य | मनुष्यभवहीन १३२ सागर यावदापूर्य सुरभवाच्युत सम्यग्दृष्टि देवप्रा० बन्धावलिकापरतो देवप्रायोग्ये प्रक्षेपकः |
| नरक २ कस्य | सप्तवारानुत्कृष्टायुषाऽऽपूर्यासन्ने भवे मनुष्यत्व प्राप्य जातक्षपक ( च० प्र० स० स० ) |
| देव २-वै० ७ कयो | बन्धान्तावलिकापरत नरक २ कस्योत्कृ० प्र० संक्रमकविधिवत् |
| मनुष्य २ कस्य | अन्तर्मु० हीन ३३ सा० यावत् सम्यक्त्वेन सह मान्तर्मुहूर्त्त मिथ्यात्व प्राप्तस्तन्निमित्त तिर्यग्द्विक बध्नन् सप्तम्या निर्गत्य प्रथमे समये यथाप्रवृत्तेन तिर्यग्द्विके संक्रमक |
| आहा० ७ कस्य | समुदितोत्कृष्टाप्रमत्तकाल यावद् आपूरका ( शेष स्थिरसम ) |
| जिननाम्न | स्थिरसम ( परं स पूर्वकोटिद्वयाधिक ३३ सागरमापूर्य बन्धान्तावलिकापरत यशसि संक्रमक ), |
| उच्चैर्गोत्रस्य | चतुर्मोहोपशम कृत्वा पुन पुन उच्चैर्नीचैश्च परस्परं संक्रमयन् नीचैर्बन्ध विच्छेदसमये नीचैर्गोत्रे संक्रमक |

साम्प्रत जघन्यप्रदेशसक्रमस्वामित्वमभिधानीयम्, तच्च प्राय' क्षपितकर्मांशे प्राप्यत इति क्षपितकर्मांशस्य स्वरूप कर्मप्रकृतित एवात्र समुद्ध्रियते, तथा च तद्ग्रन्थ —"पल्लासखिय भागूण कम्मट्ठिइमच्छिओ णिगोएसु। सुहुमेसु भवियजोग जहन्नग कट्टु निग्गम्म ॥ १ ॥ जोगेसुऽसखवारे सम्मत्त लभिय देसविरइ च। अट्ठक्खुत्तो विरइ सजोअणहा तइयवारे ॥ २ ॥ चउरुवसमित्तु मोह लहु खवन्तो भवे खवियकम्मो। पाएण तहिं पगय पडुच्च काओवि सविसेस ॥ ३ ॥" व्याख्या—"यो जीव' पल्योपमासख्येयभागेनोनां कर्मस्थितिं सप्ततिसागरोपमकोटाकोटिप्रमाणा यावत्पल्योपमासख्येयभागोनसप्ततिसागरोपमकोटाकोटिप्रमाण काल यावदित्यर्थ, सूक्ष्मानन्तकायिकेषु मध्ये स्थित्वा, सूक्ष्मनिगोदा हि स्वल्पायुषो भवन्ति, ततस्तेषा निरन्तरप्रभूतजन्ममरणवेदनार्तत्वेन प्रभूतपुद्गलपरिशाट स्यादिति सूक्ष्मनिगोदग्रहणम्। सोऽपि शेषनिगोदजीवानपेक्ष्याल्पकषायोऽल्पयोगश्च गृह्यते, मन्दकषायतया स्वल्पतरा स्थितिं बध्नाति स्तोका चोद्वर्तयति। मन्दयोगतया च नवकर्मपुद्गलोपादानमतिस्तोक भवतीति कृत्वा। ईदृश॰ सूक्ष्मनिगोदो भूत्वाऽभव्यप्रायोग्यजघन्यस्वल्प प्रदेशसञ्चय कृत्वा ततः सूक्ष्मनिगोदेभ्यो निर्गत्य योग्येषु सम्यक्त्वदेशविरतिसर्वविरतियोग्येषु त्रसेषु मध्ये समुत्पद्य पल्योपमासख्येयभागमध्येऽसख्यवारान् यावत् सम्यक्त्व तावत एव वारान् किञ्चिदूना देशविरतिं च लब्ध्वा, कथ लब्ध्वेति चेदुच्यते—सूक्ष्मनिगोदेभ्यो निर्गत्य बादरपृथ्वीकायिकेषु मध्ये समुत्पन्नस्ततोऽन्तर्मुहूर्तेन कालेन निर्गत्य मनुष्येषु पूर्वकोट्यायुष्केषु मध्ये समुत्पन्नः, तत्रापि शीघ्रमेव माससप्तकानन्तर योनिनिर्गमनेन जातोऽष्टवार्षिक सन् सयम प्रतिपन्नः। ततो देशोना पूर्वकोटिं यावत् सयममनुपाल्य स्तोकशेषे जीविते मिथ्यात्व प्राप्तः। ततो मिथ्यात्वसहित एव मृत्वा दशवर्षसहस्रप्रमाणस्थितिषु देवेषु मध्ये देवत्वेनोत्पन्न। ततोऽन्तर्मुहूर्तमात्रे गते सम्यक्त्व प्राप्नोति। ततो दशवर्षसहस्राणि जीवित्वा तावन्त च काल सम्यक्त्वमनुपाल्यान्ते मिथ्यात्वेन काल गतः सन् बादरपृथ्वीकायिकेषु समुत्पन्नः। ततोऽन्तर्मुहूर्तेन ततोऽप्युद्वृत्य मनुष्येषु समुत्पद्यते। ततः पुनरपि सम्यक्त्व देशविरतिं वा प्रतिपद्यते। एव देवमनुष्यभवेषु सम्यक्त्वादि गृह्णन् मुञ्चश्च तावद्वाच्यो यावत्पल्योपमासख्येयभागमात्रकालमध्ये सख्यातीतान् यावत्सम्यक्त्वलाभ स्वल्पकालिकश्च देशविरतिलाभो भवति। सम्यक्त्वादिप्रतिपत्तिकाले बहुप्रदेशाः प्रकृतीरल्पप्रदेशा करोतीति बहुश सम्यक्त्वादिप्रतिपत्तिग्रहणम्। एतेषु च सम्यक्त्वादियोग्येषु भवेष्वष्टकृत्वा अष्टौ वारान् यावद्विरतिं सर्वविरतिं लभते। "तइयवारे"त्ति तावत एव वारानष्टौ वारानित्यर्थः। "सयोजणहा" उद्वलनेनानन्तानुबन्धिविघातको भूत्वा, उक्त च—"अणउव्वलण च अट्ठवारा" इति। तथा चतुरो वारान् मोहनीयमुपशमय्य ततोऽस्मिन् भवे लघु शीघ्र कर्माणि क्षपयन् क्षपितकर्मांश उच्यते, तेन च क्षपितकर्मांशेनेह जघन्यप्रदेशसक्रमस्वामित्वचिन्तायां प्रायेण बाहुल्येन प्रकृतमधिकार, कासुचित्पुन प्रकृतीरधिकृत्य सविशेष भणिष्यामि ॥१॥२॥३॥" इति।

अथ जघन्यप्रदेशसक्रमस्वामित्व पृथक्त्वेनोच्यते—तत्र ज्ञानावरणपञ्चकदर्शनावरणषट्कान्तरायपञ्चकहास्यरतिभयजुगुप्सारूपाणा विंशतिप्रकृतीना स्वस्वबन्धचरमसमये यथाप्रवृत्तसक्रमेण जघन्यप्रदेशसक्रमो भवति। तत्राप्यवधिज्ञानावरणवर्जज्ञानावरणचतुष्कावधिदर्शनावरणवर्जदर्शनावरणत्रयरूपावरणसप्तकस्यावधिज्ञानयुतो जघन्यप्रदेशसक्रम

[सुगा ]

धर्मी भवति, यतोऽवधिज्ञानमुत्पादयता प्रभूताः कर्मपुद्गलाः परिशाटिता भवन्तीति
थाऽवधिद्विकावरणयोस्त्वनवधिको वाच्यः, यत ...
ावतस्तयोरतीव रूक्षाः कर्मपुद्गला जायन्ते, ततः स्वबन्धचरमसमयेऽपि प्रभूताः
रिशाटन्ति संक्रमयन्ति चेति जघन्यप्रदेशसंक्रमो न लभ्यते । ...
कयोस्तु स्वस्वबन्धव्यवच्छेदानन्तरं गुणसंक्रमसद्भावेन जघन्यसंक्रमो न लभ्यत इति
स्वबन्धचरमसमयो गृहीतः । अन्तरायपञ्चकस्य बन्धोपरमे प्रतिग्रहाभावात् संक्रमा...
योऽतो बन्धचरमसमय इत्युक्तम् । स्त्यानर्द्धित्रिकस्त्रीवेदयोरन्तर्मुहूर्तमिश्रान्तरितं द्वात्रिं
शच्छतसागरोपमं यावत् सम्यक्त्वमत्ययतः प्रभूतं कर्मदलं परिशाट्य क्षपणायोद्युक्तो
यथाप्रवृत्तकरणान्तिमसमये विध्यातसंक्रमेण जघन्यप्रदेशसंक्रमं करोति । अपूर्वकर-
णादौ गुणसंक्रमादिसद्भावेन जघन्यसंक्रमाभावः । पञ्चसंग्रहमूलवृत्तौ तु यथाप्रवृत्तसंक्र-
मेण जघन्यसंक्रम इत्युक्तं परं तदशुद्धं प्रतिभाति, यतो बन्धयोग्यतायां सत्यां यथा-
प्रवृत्तसंक्रमप्रवृत्तेः, अत्र तु बन्धाभावात् जघन्यसंक्रमप्रसङ्गाच्च विध्यातसंक्रम एव सम्भ-
वति, कर्मप्रकृतिचूर्णौ तु अभिधानपुरस्सरं नोक्तमिति । तथा सातवेदनीयस्याकृतमोहो-
पशमश्चरमासातबन्धस्यान्तिमसमये वर्तमानः क्षपणायोद्यतो जघन्यप्रदेशसंक्रमं करोति,
परतो हि सातस्य प्रतिग्रहत्वेन भवति, न संक्रमः । कृतमोहोपशमो हि गुणसंक्रमेणोपचितस्य
सातस्य प्रभूतं दलं संक्रामति, न च तेनेह प्रयोजनमित्यकृतमोहोपशम इत्युक्तम् । तथाऽ-
कृतमोहोपशमः क्षपकश्रेण्यामारूढोऽपूर्वकरणाद्धायाः प्रथमावलिकायाश्चरमसमये संज्व-
लनलोभस्य जघन्यप्रदेशसंक्रमं करोति, परतस्तु गुणसंक्रमेण संक्रान्तदलिकस्य संक्रमा-
वलिकातिक्रान्तत्वेन संक्रमसम्भवात् जघन्यप्रदेशसंक्रमो न प्राप्यते । तथा मिथ्यात्व
स्यान्तर्मुहूर्तमिश्रान्तरितं द्वात्रिंशदुत्तरशतसागरोपमं यावत्सम्यक्त्वानुपालनेन क्षपयित्व
किञ्चिच्छेषीकृतस्य क्षपकारूढः स्वकीययथाप्रवृत्तकरणचरमसमये विध्यातसंक्रमेण जघ
न्यप्रदेशसंक्रमं करोति, परतो गुणसंक्रमसम्भवेन जघन्यसंक्रमो न प्राप्यत इति । तथ
सम्यक्त्वमिश्रयोः स्तोककालिकगुणसंक्रमेण मिथ्यात्वदलोपचितीकृतयोः द्वे षट्षष्टी साग
रोपमाणां सम्यक्त्वमनुभूय मिथ्यात्वं गतः पल्योपमासंख्येयभागमात्रेण कालेन सम्य
क्त्वमिश्रे उद्वलयन् स्तोके चोद्वलनासंक्रमे द्विचरमस्थितिखण्डस्य चरमसमये मिथ्य
त्वरूपे परस्थाने दलिकप्रक्षेपरूपं जघन्यप्रदेशसंक्रमं करोति । तथा चतुष्कृत्वो मोहनं
योपशमं चारित्रमोहप्रकृतीनां दलिकं प्रभूतं स्थितिघातरसघातगुणश्रेणिगुणसंक्रमैः क्ष
यति, ततो मिथ्यात्वं गत्वा विसंयोजकः पुनः स्तोककालमनन्तानुबन्धिनो बद्ध्वा चारि
मोहसत्कं स्तोकं दलिकं बध्यमानेषु तेषु संक्रमयति । ततोऽन्तर्मुहूर्ते गते सति पुनः सम्यक
त्वमासाद्य द्वात्रिंशदुत्तरशतसागरोपमं यावदनुपाल्य च क्षपणायोत्थितः सन् स्वकी
यथाप्रवृत्तकरणचरमसमयेऽनन्तानुबन्धिनां विध्यातसंक्रमेण जघन्यप्रदेशसंक्रमं करोति
परतः गुणसंक्रमसम्भवेन जघन्यप्रदेशसंक्रमो न प्राप्यत इति । तथाऽरतिशोकमध्य

मकषायाष्टककुवर्णादिनवकोपघातास्थिराशुभायशःकीर्त्यसातवेदनीयरूपाणां चतुर्विंशतिप्रकृतीनां देशोनपूर्वकोटिं यावत् संयममनुपाल्य पर्यन्ते तीव्रक्षपकश्रेण्यामारूढो यथाप्रवृत्तकरणचरमसमये यथाप्रवृत्तसंक्रमेण जघन्यप्रदेशसंक्रमं करोतीति पञ्चसङ्ग्रहमूलवृत्तिकाराः, तथा चाहु —"अरईसोगट्ठकसायअसुभधुवबन्धिअथिरतियगाण । अस्सायस्स य चरिमे अहापवत्तस्स लहु खवगे ॥ १ ॥" व्याख्या—"अरतिशोकमध्यमाष्टकषायाशुभध्रुवबन्धिकुवर्णादिनवकोपघातास्थिराशुभायशःकीर्त्यसातानां देशोनपूर्वकोटिकृततीव्रसंयमस्य क्षपकश्रेण्यां यथाप्रवृत्तकरणान्तसमये यथाप्रवृत्तसंक्रमेण जघन्यः प्रदेशसंक्रमो भवति, अपूर्वकरणे गुणसंक्रमसंभवात् स न लभ्यते इति गाथार्थः" इति । मलयगिरिचरणास्तु कषायाष्टकरहितानां षोडशप्रकृतीनां मासपृथक्त्वाभ्यधिकाष्टसु वर्षेष्वतिक्रान्तेषु शीघ्रमेव क्षपणायोत्थितो यथाप्रवृत्तकरणचरमसमये यथाप्रवृत्तसंक्रमेण जघन्यप्रदेशसंक्रमं करोति । मध्यमकषायाष्टकस्य तु देशोनपूर्वकोटिं यावत् संयमं परिपाल्य क्षपणायोत्थितो यथाप्रवृत्तिकरणचरमसमये विध्यातसंक्रमेण जघन्यप्रदेशसंक्रमं करोति । तथा चोक्तगाथायां मलयगिरिकृतवृत्तिः—"अरतिशोकयोरष्टानामप्रत्याख्यानप्रत्याख्यानावरणसहितानां कषायाणामशुभध्रुवबन्धिनीनां कुवर्णादिनवकोपघातरूपाणां अस्थिरत्रिकस्यास्थिराशुभायशःकीर्तिरूपस्यासातवेदनीयस्य सर्वसंख्यया चतुर्विंशतिप्रकृतीनां, तत्रापि कषायाष्टकरहितानां लघुक्षपके सर्वेभ्योऽप्यन्येभ्यः शीघ्रमेव क्षपणायोत्थितस्य मासपृथक्त्वाभ्यधिकेष्वष्टसु वर्षेष्वतिक्रान्तेषु क्षपणाय समुद्यतस्येत्यर्थः । अष्टौ कषायान् प्रति देशोनां पूर्वकोटिं यावत् संयममनुपाल्य मूलटीकायां पुनः सर्वा अप्येताः प्रकृतीरधिकृत्य देशोनां पूर्वकोटिं यावत् संयममनुपाल्येत्युक्तम् । क्षपकश्रेणिं प्रतिपन्नस्य यथाप्रवृत्तकरणचरमसमये कषायाष्टकस्य विध्यातसंक्रमेण शेषाणां यथाप्रवृत्तसंक्रमेण जघन्यप्रदेशसंक्रमो भवति" इति । न्यायाचार्याणामप्ययमेवाभिप्रायः । कर्मप्रकृतिचूर्णिकृद्भिस्तु चतुर्विंशतिप्रकृतीनां विध्यातसंक्रमेण जघन्यप्रदेशसंक्रमो भवतीत्युक्तं, तथा च त आहुः —"अपच्चक्खाणावरणपच्चक्खाणावरणासाता, कुवन्ननवग उवघात च एता दस असुभधुवा, अथिर असुभ अजस च एत अथिरतिग भण्णइ, एतासिं चवीसाए पगतीण अट्ठकसायवज्जाण सव्वलहुति लहुमेव सेढिं पडिवन्नस्स खवणान्ते अब्भुट्ठियस्स अहापवत्तस्स चरिममिति अप्पणो अहापवत्तकरणस्स चरिमसमए विज्झायसंकमेण जहन्नओ पदेससंकमो परतो गुणसंकमो होतित्ति जहन्नओ पदेससंकमो ण होति । अट्ठण्हं कसायाण देसूणं पुव्वकोडिं संजमं अणुपालेऊण अन्ते खवगसेढिं पडिवन्नस्स जहन्नगं भाणियव्वं । अरतिसोगाणं जहा असायस्स जहन्नओ पदेससंकमो तहेव सामी वि सो चेव" इति । अरतिशोकास्थिराशुभायशःकीर्त्यसातमध्यमकषायाष्टकरूपाणां चतुर्दशप्रकृतीनामप्रमत्ते बन्धाभावेन विध्यातसंक्रमेण जघन्यप्रदेशसंक्रमो भवति, अप्रमत्तगुणस्थाने चारित्रमोहसत्कस्य यथाप्रवृत्तिकरणस्याभिधानात्, शेषाणां बध्यमानत्वेन यथाप्रवृत्तसंक्रमेण जघन्यप्रदेशसंक्रमो भवतीत्यस्मदभिप्रायः, तत्त्वं पुनः तद्विदो विदन्ति । तथा पुंवेदस्य लोभवर्जसंज्वलनत्रिकस्य च क्षपकश्रेण्यामारूढो घोलमानेन जघन्ययोगिना सता स्वस्वबन्धव्यवच्छेदसमये यद्दलं बद्धं तस्य चरमप्रक्षेपे जघन्यप्रदेशसंक्रमो

भवति। एतासां चतसृणामपि प्रकृतीनां स्वस्वबन्धचरमसमये समयोनावलिकाद्विकबद्धं मुक्त्वाऽन्यत् सङ्क्रमयोग्यं प्रदेशसत्कर्म न विद्यते। समयोनावलिकाद्विकबद्धमपि प्रतिसमयं गुणसंक्रमेण समयोनावलिकाद्विकमात्रेण कालेन क्षयमुपयाति तावत् यावत् चरमसमयबद्ध-दलिकस्यासंख्येयभागः शेषोऽवतिष्ठते। ततस्तं सर्वसंक्रमेण संक्रमयतो जघन्यप्रदेशसंक्रमो भवति। देवद्विकनरकद्विकवैक्रियसप्तकरूपवैक्रियैकादशकमेकेन्द्रियभवे उद्वलयन् यः पञ्चेन्द्रि-यत्वं प्राप्तः तत्र पुनरप्येकादशकमन्तर्मुहूर्तं यावत् बद्ध्वा ततस्त्रयस्त्रिंशत्सागरोपमायुष्को नार-को जातः तत्र च यथासंभवमनुभूय तत उद्वृत्य पञ्चेन्द्रियतिर्यक्षु मध्ये समुत्पन्नः तत्र वैक्रियै-कादशकमबद्ध्वैवैकेन्द्रियो जातस्तस्य तत्र पल्योपमासंख्येयभागमात्रकालप्रमाणया चिरोद्वलन-योद्वलयतो द्विचरमस्थितिखण्डस्य चरमसमये यः परप्रकृतौ दलिकप्रक्षेपः स वैक्रियैकादशकस्य जघन्यप्रदेशसंक्रमो भवति। तथा तेजोवायुभवेषु वर्तमानेन मनुजद्विकमुच्चैर्गोत्रं चोद्वलितं भूयः सूक्ष्मैकेन्द्रियभवप्राप्तेनान्तर्मुहूर्तकालं यावद् बद्धं ततो निर्गत्य यः पञ्चेन्द्रियत्वं प्राप्तः, ततो मृत्वा सप्तमपृथिव्यां ज्येष्ठस्थितिको नारको जातः, ततः पुनरुद्वृत्य पञ्चेन्द्रियतिर्यक्त्वेन समुत्पन्नः, एतावत्कालमुच्चैर्गोत्रं मनुजद्विकमबद्ध्वा प्रदेशसंक्रमेण चानुभूय तेजोवायुषु मध्ये समुत्पन्नः, तत्र तस्य मनुजद्विकमुच्चैर्गोत्रं च चिरोद्वलनयोद्वलयतो द्विचरमस्थितिखण्डस्य चरमसमये यः परप्रकृतौ दलिकप्रक्षेपः स मनुजद्विकस्योच्चैर्गोत्रस्य च जघन्यप्रदेशसंक्रमो भवति। तथाऽऽहारकसप्तकमप्रमत्तः स्तोककालं बद्ध्वा कर्मवैचित्र्यादविरतिभावं गतस्ततोऽन्त-र्मुहूर्तात्परतो दीर्घपल्योपमासंख्येयभागमात्रप्रमाणया महोद्वलनयोद्वलयतो द्विचरमस्थिति-खण्डचरमसमये परप्रकृतौ यत्प्रदेशाग्रं प्रक्षिपति तत् तस्य जघन्यप्रदेशसंक्रमो भवति। तथा कश्चित्क्षपितकर्मांशः सर्वजघन्यतिर्यग्द्विकोद्योतसत्कर्मा त्रिषष्ट्यधिकं सागरोपमाणां शतं पल्यो-पमचतुष्कं च यावत् तिर्यग्द्विकमुद्योतं चाबद्ध्वा यथाप्रवृत्तकरणचरमसमये तयोर्विध्यातसं-क्रमेण जघन्यप्रदेशसंक्रमं करोति। कथमुक्तकालं यावदबन्ध इति चेदित्थं—कश्चित्क्षपितक-र्मांशस्त्रिपल्योपमायुष्केषु देवकुर्वादिषु युगलिकधार्मिकेषु मनुजेषु समुत्पन्नः, तत्रैतत्प्रकृति-त्रिकस्य तिर्यक्प्रायोग्यत्वेन बन्धाभावः, युगलिकास्तु देवप्रायोग्यमेव कर्म बध्नन्ति, न शेष-गतिप्रायोग्यं, तत्र चान्तिमेऽन्तर्मुहूर्ते सम्यक्त्वं समासाद्याप्रतिपतितसम्यक्त्वो मृत्वा पल्यो-पमस्थितिकदेवत्वेन समुत्पन्नः। तत्र च सम्यक्त्वप्रत्ययात् एतत्त्रिकं न बध्नाति, ततोऽप्यप्र-तिपतितसम्यक्त्वो मनुजेषूत्पद्य चारित्रं च परिपाल्याप्रतिपतितसम्यक्त्वो ग्रैवेयके त्रिदश एकत्रिंशत्सागरोपमस्थितिको जातस्तत्र चान्तर्मुहूर्तादूर्ध्वं मिथ्याभावं प्राप्तः, तत्र भवप्रत्य-यत एवैतदबन्धः, ततो भूयोऽप्यन्तिमेऽन्तर्मुहूर्ते सम्यग्दर्शनं समासाद्याप्रतिपतितसम्यक्त्वो मनुजेषु समुत्पन्नः, तत्र च सर्वविरतिं प्रतिपाल्य तथैव ससम्यक्त्वो विजयादिषु देव-त्वेन समुत्पन्नः, ततश्च्युत्वा ससम्यक्त्वो मनुष्येषु समुत्पन्नः तत्रापि चारित्रमाराध्य भूयो विजयादित्रिदशेषु समुत्पन्नः, ततोऽपि निर्गत्य मनुष्येषु ससम्यक्त्वः समुत्पन्नः, तत्रान्तर्मुहू-र्तादूर्ध्वं मिश्रं गच्छति, पुनः सम्यक्त्वं समासाद्य वारत्रयमच्युतगमनेन षट्षष्टिसागरोपम-

प्रमाणं सम्यक्त्वकालं पूरयति, अत्र सम्यक्त्वात् प्रच्युतस्य मिश्रगमनमुक्तं तत्कार्मग्रन्थिकमतेन, सैद्धान्तिकाना तु नैतत्सम्मत, तथा चोक्त कल्पभाष्ये—"मिच्छत्ता सकंती अविरुद्धा होइ सम्ममीसे तु । मीसातो वा दुण्णिवि ण उ सम्मा परिणमे मीस ॥१॥"—मिथ्यात्वात् मिथ्यात्वगुणस्थानात् सम्यक्त्वमिश्रयोरविरतसम्यग्दृष्टिमिश्रदृष्टिगुणस्थानकयो' सक्रान्तिरविरुद्धा भवति, मिश्रतो वा द्वयोर्मिथ्यात्वगुणस्थानाविरतसम्यग्दृष्टिगुणस्थानयो सक्रान्तिरविरुद्धा भवतीति योज्यम्, सम्यक्त्वात् अविरतसम्यग्दृष्टे॰ मिथ्यात्वे सक्रान्ति, न पुनर्मिश्रगुणस्थानके इत्येवमर्थे क्रियमाणे सम्यक्त्वात् मिश्रगमन सैद्धान्तिकाभिप्रायेण न सभवतीति । कल्पभाष्यवृत्तौ तु मलयगिरिभि मिथ्यात्वमिश्रसम्यक्त्वपुद्गलाना सक्रमपरत्वेनेय गाथा व्याख्याता । सक्रमे च कर्मप्रकृतिकृता सैद्धान्तिकाना च न विरोध' सभाव्यते, यत सम्यक्त्वपुद्गला न कस्यापि मते सम्यग्मिथ्यात्वे सक्रामन्ति । मिथ्यादृष्टौ दर्शनमोहनीयस्य सक्रम वक्ष्यमाने मिथ्यात्वे एव भवति, सम्यग्दृष्टौ तु सम्यक्त्वपुद्गला अन्यप्रकृतिरूपेण न सक्रामन्ति, द्वितीये तृतीये गुणस्थानके च दर्शनमोहस्य सक्रम एव निषिद्ध इत्यादिक प्राक्प्रकृतिसक्रमेऽभिहित तदेव कर्मप्रकृतिकृतामप्याशय । सैद्धान्तिकाभिप्रायमदर्शनार्थं तु दर्शनमोहसक्रमसबन्धवत्सवृत्तिक कल्पभाष्यमेवोपन्यस्यते, तथा च तद्ग्रन्थ—"सोऊण अहिसमेचा करेइ सो वड्ढमाणपरिणामो । मिच्छे सम्मामिच्छे सम्मे विय पोग्गले समय ॥ १० ॥" व्याख्या—"श्रुत्वा केवलिप्रभृतीना वच, अभिसमेत्य वा जातिस्मरणादिना सम्यक्त्वमवगम्य, सोऽपूर्वकरणे वर्तमानो वर्धमानपरिणाम समकमेककाल मिथ्यात्वपुद्गलान् त्रिधा करोति, तद्यथा—'मिच्छे' इति मिथ्यात्वपुद्गलान् सम्यग्मिथ्यात्वपुद्गलान् सम्यक्त्वपुद्गलानिति" । अथैषा पुद्गलाना परस्पर सक्रमो भवति किंवा नेति उच्यते—भवतीति ब्रूम, तथा चाह—"मिच्छत्ताओ मीसे मीसस्स उ होज सक्रमो दोसु । सम्मे वा मिच्छे वा सम्मा मिच्छे न पुण मीस ॥ ११ ॥" व्याख्या—"मिथ्यात्वान्मिथ्यात्वदलिकात्सम्यग्दृष्टि प्रवर्धमानपरिणाम पुद्गलानाकृष्य मिश्रे, उपलक्षणमेतत् सम्यक्त्वे च सक्रमयति, मिश्रस्य पुद्गलाना सक्रमो द्वयोर्भवति, तद्यथा—सम्यक्त्वे मिथ्यात्वे च, तत्र सम्यग्दृष्टि सम्यक्त्वे सक्रमयति मिथ्यादृष्टिर्मिथ्यात्वे, सम्यक्त्वात् सम्यक्त्वदलिकात् पुन पुद्गलान् मिथ्यात्वे सक्रमयति न पुनर्मिश्रमिति" । साम्प्रतममुमेवार्थं प्रकारान्तरेणाह—"मिच्छत्ताओ अहवा मीस सम्म च कोइ सक्रमइ । मीसाओ वा सम्म गुणवुड्ढी हायतो मिच्छ ॥ १२ ॥" व्याख्या—"अथवेत्युक्तस्यैवार्थस्य भणनप्रकारान्तरद्योतने, मिथ्यात्वान्मिथ्यात्वदलिकात् पुद्गलानाकृष्य कश्चिन्मिश्र सम्यक्त्व च सक्रमयति । यदि वा कश्चिद् गुणैर्वृद्धिर्यस्य स गुणवृद्धिः प्रवर्धमानपरिणाम सम्यग्दृष्टिरित्यर्थ, मिश्रान्मिश्रदलिकात् पुद्गलानादाय सम्यक्त्व सक्रमयति । हायन्हीनपरिणामो मिथ्यादृष्टिरित्यर्थः, मिश्रात् पुद्गलानाकृष्य मिथ्यात्व सक्रमयतीति" । "मिच्छत्ता सकंती अविरुद्धा होइ सम्ममीसे तु । मीसातो वा दुण्णि वि ण उ सम्मा परिणमे मीस ॥ १३ ॥" व्याख्या—"मिथ्यात्वात् पुद्गलसक्रान्तिः सम्यक्त्वमिश्रयोरविरुद्धा, मिश्रतो वा सम्यग्मिथ्यात्वयो वा पुद्गलानादाय द्वावपि सक्रमयति, तद्यथा—मिथ्यात्व सम्यक्त्व च यथोक्तमनन्तर, सम्यक्त्वात्

सम्यक्त्वदलिकात् पुनः पुद्गलानानीय न मिश्रं मिश्रभावं परिणमयति" इति । ननु मलयगि-
रिपादैः "मिच्छत्ताओ" इतीयं गाथा दर्शनमोहनीयसंक्रमपरत्वेन व्याख्याता, कल्पभा-
ष्यसप्तोत्तरशततमगाथावृत्तौ च स्पष्टतया मिश्रगमनमपि सम्यक्त्वादुक्तं तथा चाहुः–"प्रथम-
तया क्षायोपशमिकं सम्यक्त्वमासादयति, ततः परिणामवशतः कालान्तरेण मिश्रं मिथ्यात्वं वा
गच्छति" इत्युक्तं तथापि किमर्थं भवता मतान्तरत्वेनोपन्यस्यत इति चेत्? सत्यम्,
किन्तु देवेन्द्रसूरिभिर्याचार्यैश्चेयं गाथा सैद्धान्तिकमतत्वेनोपन्यस्ता, तथा च नव्यश-
तकवृत्तौ–'इह च सम्यक्त्वात् प्रच्युतस्य मिश्रगमनं यदुच्यते तत्कार्मग्रन्थिकाभिप्रायेण संमतमे-
वेति, सैद्धान्तिकाना तु न समतमिति । उक्तं च–"मिच्छत्ता संकंती अविरुद्धा होइ सम्ममीसेसु ।
मीसाओ वा दोसु सम्मा मिच्छं न उण मीसं ॥ १ ॥" इत्यस्माभिरपि तथैवोपन्यस्त-
मिति । तदुक्तं–"पलियाइं तिन्नि भोगावणिमि भवपच्चय.मलियमेगं । सोहम्मे सम्मत्तेण नर-
भवे सव्वनिरईए ॥ १ ॥ मिच्छो भवपच्चयओ गेविज्जे सागराइं इगतीसं । अन्तमुहुत्तुणाइं संमत्त
संमि लहिऊण ॥ २ ॥ विरयनरभवतरिओ अणुत्तरसुरो उ अयरछावट्ठा । मिस्सं मुहुत्तमेगं
फासिय मणुओ विरओ ॥ ३ ॥ छावट्ठी अयराण अणुयए विरयनरभवतरिओ । निरिनरयतिगु-
ज्जोयाण एस कालो अवन्धम्मि ॥ ४ ॥" इति । यत्त्वत्र विजयादिषु वारद्वयं गतस्यापि
अच्युतादिगमनमुक्तं तत्तत्त्वार्थकृतां न सम्मत, तथा चाहुः तत्त्वार्थसूत्रे–"विजयादिषु
द्विचरमाः" इति । पञ्चसंग्रहमूलवृत्तिसत्के द्वे प्रती उपलब्धे । तत्रैकस्यां विध्यातसंक्रमेण
जघन्यसंक्रमो भवतीत्युक्तम् । अन्यस्यां तु–"त्रिषष्ट्यभ्यधिकं सागरोपमशतं ग्रैवेयकानुत्तरदे-
वत्वेष्वनुभूय ततस्तिर्यग्द्विकोद्योतानि यथाप्रवृत्तकरणान्तसमये यथाप्रवृत्तसंक्रमेण संक्रमयति, तदा
जघन्यसंक्रमस्तेषां भवति" इत्युक्तं तदशुद्धं प्रतिभाति, यतः त्रिषष्ट्यभ्यधिकसागरोपमश-
तमानलायाममे "तिर्यग्द्विकोद्योतानि यथाप्रवृत्तकरणान्तसमये विध्यातसंक्रमेण संक्रमयति, तदा
जघन्यः संक्रमः स्यादिति । स्वबन्धान्तसमये जघन्यसंक्रमेण संक्रामतो"त्युक्तम् । तथा
सप्तमगुणस्थाने यथाप्रवृत्तकरणान्ते एतत्त्रिकस्य बन्धाभावश्चात एव 'स्वबन्धान्तसमये
जघन्यसंक्रमेण संक्रामती' त्यप्यशुद्धम् । एवं जातिचतुष्कस्थावरचतुष्कातपानामपि
वाच्यम् । नवरं पञ्चाशीत्यधिकं सागरोपमशतं पल्योपमचतुष्कं चाबन्धेति वाच्यम् ।
तथा हि–क्षपितकर्मांशो द्वाविंशतिसागरोपमस्थितिकः षष्ठपृथिव्यां नारको जातः । तत्र
च भवप्रत्ययत एवैतासामबन्ध । पर्यन्तमुहूर्ते सम्यक्त्वं समासाद्य ससम्यक्त्वो मनुजे-
षूत्पद्य देशविरतिं समासाद्य ततो मृत्वा चतुष्पल्यस्थितिकः सौधर्मदेवो जातः । ततो-
ऽप्यप्रतिपतितसम्यक्त्वो निर्गत्य मनुष्येषु समुत्पन्नः तत्रापि सर्वविरतिं समाराध्य मृत्वा
एकत्रिंशत्सागरोपमस्थितिके नवमग्रैवेयके देवो जातः । तत्र चान्तर्मुहूर्तोर्ध्वं मिथ्यात्वं
गतोऽपि भवप्रत्ययादेव एताः प्रकृतीर्न बध्नाति । ततश्चान्तिमेऽन्तर्मुहूर्ते सम्यक्त्वं समा-
साद्याप्रतिपतितसम्यक्त्वस्ततश्च्युत्वा मनुजेषु समजनि । तत्र च चारित्रं परिपाल्य वार-
द्वय विजयादिषु गमनेन षट्षष्टिसागरोपमाणि सम्यक्त्वकालं पूरयित्वा, मनुजेष्वन्तर्मुहूर्ते

मिश्रकालमनुभूय तदन्तरित द्वितीयं षट्षष्टिसागरोपमं यावत् पुनर्वारत्रयमच्युतगमनेन सम्यक्त्वमनुभूयान्तिमेऽन्तर्मुहूर्ते क्षपणायोद्यतते । सर्वत्रैतासा बन्धाभाव । पञ्चेन्द्रियजात्याद्यसंस्थानाद्यसंहननतैजससप्तकप्रशस्तखगतिशुभवर्णाद्येकादशकागुरुलघुपराघातोच्छ्वासत्रसदशकनिर्माणरूपाणा षट्त्रिंशत्प्रकृतीना जघन्य प्रदेशाग्र कृत्वा क्षपितकर्मांशः क्षपकश्रेण्यामारूढोऽपूर्वकरणसत्कप्रथमावलिकान्त्यसमये जघन्यप्रदेशसक्रम करोति । तत ऊर्ध्वं गुणसंक्रमेण लब्धदलिकस्यापि सक्रमावलिकातिक्रान्तत्वेन सक्रमसभवात् जघन्यो न प्राप्यते । पञ्चसङ्ग्रहमूलवृत्तौ तु "प्रथमसंहननवर्जपञ्चत्रिंशत्प्रकृतीनामेव प्रथमसंहननस्य स्वबन्धान्तसमये" इति । तथा प्रथमवर्जसंहननपञ्चकप्रथमवर्जसंस्थानपञ्चकाप्रशस्तखगति दुर्भगदुःस्वरानादेयनपुंसकवेदनीचैर्गोत्ररूपाणा षोडशप्रकृतीना स्त्रीवेदवद्वाच्यम् । नवरमेतासा जघन्यप्रदेशसक्रमस्वामी प्रथम त्रिपल्योपमायुष्केषु मनुष्येषु मध्ये समुत्पन्नोऽन्तिमे चान्तर्मुहूर्तेऽवाप्तसम्यक्त्वो वाच्य., शेष तथैव वाच्यम् । औदारिकसप्तकस्य सर्वजघन्यप्रदेशसत्कर्मा सन् युगलिकधार्मिकेषु तिर्यङ्मनुष्येषु समुत्पन्नस्तत्र च तमनुभवन् निजायुःपश्चरमसमये तत्परप्रकृतौ सक्रमयतो विध्यातसक्रमेण जघन्यप्रदेशसक्रम करोति । जिननाम्नस्तु बन्धं कुर्वता प्रथमसमये यद्बद्ध दलिक बन्धावलिकातिक्रान्ताया सत्या यथाप्रवृत्तसक्रमेण यदा सक्रमयति तदा जघन्यसक्रमो भवति । तदेवमुक्तं जघन्यप्रदेशसक्रमस्वामित्वम् । तत्समाप्तौ च समाप्त प्रदेशसक्रम. । तदेव समर्थित सक्रमकरणम् ॥

जघन्यप्रदेशसक्रमस्वामिनः । अत्र ज० प्र० सक्रमः प्राय क्षपितानां ( क्षपितकर्मांशानां ) सम्भवेत् ।

| | |
|---|---|
| ज्ञानाव० ५–दर्शना० ६<br>अवधि २ कस्य | स्वस्व-धविच्छेदसमये अवधिलब्धिमताम् ( यथाप्र० स० )<br>,, अवधिलब्धिरहितानाम् |
| निद्रा २–विघ्न ५–हास्य–रति–भय–जुगुप्सानाम् (११) | ,, यथाप्रवृत्तसक्रमेण |
| सातस्य | असातस्य त्यत्र बसमये वर्तमानोऽनुपशमितमोह क्षपणोद्यत |
| स० लोभस्य | क्षपणोद्यतानुपशमितमोहानामपूर्वकरणप्रथमावलिका त्यसमये |
| स्त्रीवेद–स्त्यानर्द्धित्रिकयो | क्षपणोद्यतानां परिपालित १३२ सा० सम्यक्त्वानां यथाप्रवृत्तकरणान्ते विध्यातेन |
| मिथ्यात्वस्य | ,, ,, ,, ,, |
| सम्यक्त्व–मिश्रयोः | ह्रस्वगुणसक्रमेणापूर्य १३२ सा० सम्यक्त्व धृत्वा मिथ्यात्वप्राप्तानां उद्वलनेन उपा त्यखण्डस्या तिमसमये परप्रक्षेपेण |
| अनन्तानुबन्धि ४ णांम् | चतुर्मोहोपशम कृत्वा मिथ्यात्व प्राप्य पुन १३२ सा० सम्यक्त्व प्राप्य क्षपणोद्यतानां यथाप्र० करणा ते विध्यातेन |
| असात–कृष्णादि ९–उपघात–अस्थिर अशुभ–अयशसां (१४) | देशोनपूर्वकोटिसप्तमितानां क्षपकाणा यथाप्र० करणा त्यसमये यथा प्रवृत्तसंक्रमेण |

| | |
|---|---|
| मध्यकषाय ८ | तीव्रक्षपकाणां ( पञ्चमं० मतेन देशोनपू० को० संयमितानां क्षपकाणां ) यथाप्र० करणान्ते ( विध्यातेन ) |
| हास्य० २-पुंवेदानाम् | क्षपकाणां स्वस्वबन्धान्तसमये चरमप्रक्षेपे ( सर्वसं० ) |
| अरति-शोकयो | असातावज० प्र० संक्रामकवत् |
| सुर २-नरक २-वै० ७ कानाम् (११) | पञ्चेन्द्रियत्वे भाविबन्ध्य कृत्वा उ० स्थि० नारकत्वं प्राप्य प० तिर्यक्षु उत्पद्यैकेन्द्रियत्वं प्राप्तानां चिरोद्वलनयोपान्त्यखण्डान्तिमसमये चरमप्रक्षेपे |
| मनु० २-उच्चैर्गोत्रयोः | पूर्वोक्त ( सुरद्विकविधिना ) विधिना अग्निवायुमध्ये प्राप्तानां ( नवरं सू० एकें० भवे बद्धं इति आदौ वक्तव्य ) |
| आहा० ७ कस्य | ह्रस्वकालं बद्ध्वा अविरतिं प्राप्तानां चिरोद्वलनयोपान्त्यखण्डस्यान्तिमसमये चरमप्रक्षेपे |
| तिर्यग् २-उद्योतयोः | १३२ सा० ३ पल्य यावद्बद्ध्वा क्षपितकर्मांश यथा प्र० करणान्ते |
| शुभानि ४-स्था०-आत०-सू०-साधा० नाम् सर्वांशानां च (९) | १८५ सा० ४ पल्य 〃 〃 〃 〃 |
| पंचे०-वज्र०-समच०-शु० ७-शुभखगति सुभगादि ११-अगु०-परा०-उच्छ्वा०-निर्मा०--प्रथम १० (३१) | क्षपितकर्मांशानां क्षपकाणां ८ मो प्रथमावलिकान्ते ( पञ्चस० मतेन वज्रर्षभस्य स्वबन्धान्ते ) |
| अशुभवर्णनवकस्य १०--कुखगति-दुर्भग-दुःस्वर-अनादेय-अयु०-नीचैः (१६) | स्त्रीवेदतुल्य वाच्य ( नवरं त्रिपल्यायुर्युगलायुर्बन्धान्तर्मु० शेषे प्राप्त-सम्यक्त्व, शेष स्त्रीसम ) |
| तीर्था० १ कस्य | क्षपकजघन्याद्य० ७ प्रदेशसत्ताक त्रिपल्यायुरतिपकत्व प्राप्यायुरन्तसमये विध्यातेन संक्रामक |
| त्रिकस्य | प्रथमसमयबद्धदलिक यथाप्र० संक्रमेण संक्रामक |

संक्रमकरणं समाप्तम् ॥

व्याघातभाविन्या उद्वर्त्तनाया अयं विधिः–व्याघातो नाम आफन ... समयादिनाऽभ्यधिकोऽभिनवस्थितिवन्ध' सोऽत्र व्याघात । आ ... द्वाभ्या भागाभ्यामभ्यधिकोऽभिनवस्थितिवन्धो न भवति यावत् ताव ... द्वर्त्तना प्रवर्त्तते । तत्रापि समयादिनाभ्यधिकेऽभिनवस्थितिवन्धे आफनकर्म द्विचरमा या स्थितिर्नोद्वर्त्यते । एव समयद्वयेन समयत्रयेण यावदावलिकाया यतमेनापि 'भागेनाभ्यधिकेऽभिनवकर्मवन्धे द्रष्टव्यम् ।

॥ यावत् भागद्वयाधिको बन्धो न तावदुद्वर्त्तनाविधिः ॥

[ व्याघातोद्वर्त्तनायाम् ]







यदा तु प्राक्तनस्थित्यपेक्षया ... बन्धो जायते तदा प्राक्तनसत्कर्मणोऽन्त्यस्थितिरुद्वर्त्यते, उद्वर्त्य चावलिकाया अ. स्थापनारूपमसख्येयभागमतिक्रम्य द्वितीयेऽसख्येयतमे भागे निक्षिप्यते । थापनानिक्षेपौ जघन्यौ । अत्र स्थापना–

बद्धलता-OOOOOOOOOOOOOOOOOOOOOOO बद्धयमाना च मा स्थितिः

बध्यमानलता-OOOOOOOOOOOOOOOOOOOOO|OOO||OOO|
द्वाभ्यामावलिकासंख्येयभागाभ्यामभ्यधिकोऽभिनवबन्ध । ज० अतीत्था० ज० नि०

यदा तु समयाधिकाभ्यां द्वाभ्यामावलिकासंख्येयतमाभ्यां भागाभ्यामभ्यधिकोऽभिनवस्थितिबन्धस्तदावलिकाया प्रथममसंख्येयतम भाग समयाधिकमतिक्रम्य द्वितीयेऽसंख्येयतमे भागे निक्षिप्यते । अत्र स्थापना-

बद्धलता—OOOOOOOOOOOOOOOOOOOOO बद्धयमाना च मा स्थितिः

बध्यमानलता—OOOOOOOOOOOOOOOOOO|OOOO||OOO|
समयाधिकाभ्यां द्वाभ्यामावलिकाऽसंख्येयभागाभ्यामभ्यधिकोऽभिनवबन्धः । समयाधि०अ० नि०स एव

एवमभिनवकर्मबन्धस्य समयादिवृद्धावतीत्थापना वर्द्धते, सा च तावद्यावदावलिका परिपूर्णा भवति । निक्षेपस्तु सर्वत्र तावन्मात्र एव भवति । अत्रापि स्थापना-

बद्धलता—OOOOOOOOOOOOOOOOOO बद्धयमाना च मा स्थितिः

बध्यमानलता—OOOOOOOOOOOOOOOOOOOOO|OOOOOOOOOO||OOO|
असंख्येयभागाधिकावलिकाभ्यधिकबन्ध । अतीत्था० परिपूर्णाऽऽवलिका नि०स एव

अत ऊर्ध्वं पुनरपि नवकर्मबन्धवृद्धौ निक्षेप एव केवलो वर्द्धते, नातीत्थापना ।

उक्तं च पञ्चसंग्रहे-"निवाघाए एव ठिइउव्वट्टणाए सतकम्मदिगबन्धो । आवलिअसंखभागो जावावलि

तस्स अइत्थवणा ॥१॥ आवलिदोऽसखसो जइ वड्ढइ अहिणवो उ ठितिबन्धो । उव्वट्टति नो चरिमा जावलि अइत्थवणा ॥२॥ अइत्थावणालियाए पुण्णाए वड्ढई तु निक्खेवो" इति अत्र स्थापना—

बद्धलता—0000000000000000

00000000000000000000|000000000||000

ब॰ध्यमानसमयाधिकावलिकासख्येयभागाधिकावलिकाब॰ध । अतीत्थापना मयावलिकामात्रा । समयाधिक

अत्राल्पबहुत्वमुच्यते—सर्वस्तोकौ जघन्यातीत्थापनानिक्षेपौ, परस्पर तुल्यौ, यतो ८ घ्यावलिकासख्येयभागमात्रौ । ततोऽप्युत्कृष्टातीत्थापनाऽसख्येयगुणा, यत. सोत्कृष्टाबाधा ततोऽप्युत्कृष्टो निक्षेपोऽसख्येयगुण॰, यतः समयाधिकावलिकया साबाधया न्यून ... स्थितिप्रमाण., ततोऽपि सर्वा स्थितिर्विशेषाधिका । उक्ता स्थित्युद्वर्त्तना ॥

अथ स्थितेरपवर्त्तनोच्यते—तत्राप्यादौ निर्व्याघातभाविन्यभिधीयते—उदया... बाह्यानि स्थितिस्थानान्यपवर्तयन्ति, नोदयावलिकान्तर्गतान्यपि, उदयावलिकायाः सक... रणासाध्यत्वात् । अपवर्तयन् तद्दलिकं समयाधिके उदयावलिकात्रिभागे प्रक्षिपति, इदमु भवति—उदयावलिकाया उपरितनी या समयमात्रा स्थितिः तस्या ... वलिकाया उपरितनौ द्वौ त्रिभागौ समयोनावतिक्रम्याधस्तने समयाधिके ...त्रिभागे प्रक्षिपति । एष जघन्यनिक्षेपो जघन्यातीत्थापना च । उदयावलिकाया उपरि द्वितीयास्थिति यदाऽपवर्त्यते तदाऽतीत्थापना द्विसमयाधिकावलिका त्रिभागप्रमाणा भवति निक्षेपस्तावन्मात्र एव । यदा तु तृतीयास्थितिरपवर्त्यते तदाऽतीत्थापना त्रिसमयाधि... वलिकात्रिभागप्रमाणा, निक्षेपस्तु तावन्मात्र एव । एवमतीत्थापना प्रतिसमय ... नेतव्या यावदावलिका परिपूर्णा भवति । यावच्चातीत्थापनावलिका परिपूर्णा न भवति ता... क्षिपः समयाधिके आवलिकातृतीयभागे एव भवति नान्यत्र । अतीत्था... परिपूर्णाया तु निक्षेप एव केवलो वर्द्धते, नातीत्थापना । निक्षेपोऽपि तावद्वर्द्धते य... स्थापनावलिकाबन्धावलिकारहिताऽपवर्त्यमानसमयरहिता च सकलाऽपि कर्मस्थिति., यतो बन्धावलिकायामतीतायां सत्यां कर्मापवर्त्तयितुमारभ्यते, उदयावलिका सकलकरणासाध्ये... ति कृत्वा तद्वर्जनम्, अपवर्त्यमानसमयवर्जन तु तत्त्वादेवेति । अपवर्त्यमानस्थितिविशेषास्तु बन्धावलिकोदयावलिकारहिता सर्वा कर्मस्थिति ।

उत्कृष्टनिक्षेपस्तु यदा सर्वान्तिमं स्थितिस्थानमपवर्त्यते तदा भवति, तद्दलिक तत्स्थानादधः आवलिकामात्रमवतीर्याधस्तनेषु सर्वेषु स्थितिस्थानेषु निक्षिपति, अतः सर्वोपरितनं स्थितिस्था

नमाश्रित्योत्कृष्टनिक्षेप उक्त'। उदयावलिकाया उपरितनं समयमात्र स्थितिस्थानमपवर्त्यमान माश्रित्य जघन्यनिक्षेप । तदुक्त पञ्चसग्रहे–"उदयावलिउवरित्थ ठाण अहिकिच होइ अइहीणो । निक्खेवो सव्वोवरिठिइठाणवसा भवे परमो॥१॥"इति। एष निर्व्याघातेऽपवर्तनाविधिः।यन्त्रकम्–

॥ निर्व्याघातापवर्त्तनायाश्चित्रम् ॥




अथ व्याघातभाविन्यपवर्त्तनोच्यते–व्याघातो नाम स्थितिघात, तदुक्त पञ्चसम्हे–"ठिइघाओ एत्थ होइ वाघाओ", तस्मिन् क्रियमाणे सति समयोन कण्डकमात्रमुत्कृष्टातीत्थापना। ननु कथ समयोन कण्डकमुत्कृष्टातीत्थापनेति चेत्? उच्यते–सर्वोपरितने समयमात्रेण स्थितिस्थानेनापवर्त्यमानेन सहाधस्तात् कण्डकमतिक्रम्यते, ततस्तेन वि[ना] समयोन कण्डक भवति। तच्च कण्डक द्विविधम्, जघन्यमुत्कृष्ट च। तत्र किञ्चिदूनडा[य] स्थितिप्रमाणमुत्कृष्ट कण्डक भवति। तदुक्त कर्मप्रकृतौ–"डायठिइ किंचूणा ठिइ कडकुस्स पमाण" इति। ननु का डायस्थितिरिति चेत्? उच्यते–यस्या स्थितेरारभ्य तस्या एव प्रकृ[ते]रुत्कृष्टस्थितिबन्ध उत्प्लुत्य विधीयते तत प्रभृति सर्वापि स्थितिः डायस्थितिरिति। [सा] च किञ्चिदूना स्थिति कण्डकस्योत्कृष्ट प्रमाण भवति। पञ्चसग्रहे तु–"उक्कोस डायठि[ई] किंचूणा कडग" मूलवृत्ति–"यतो यस्या स्थितेरारभ्योत्कृष्ट स्थितिबन्ध विधत्ते निर्मापयति त[त] आरभ्योपरितनानि सर्वाण्यपि स्थितिस्थानानि डायस्थितिसज्ञानि भवन्ति। सा चोत्कृष्टत किञ्चिदू[ना] कर्मस्थितिप्रमाणा भवति, सा चोत्कृष्ट कण्डकमुच्यते" इति। इयमेवोत्कृष्टातीत्थापना, 'तत उप[रि]

तनस्थितिस्थानसत्कं दलमियन्ति स्थितिस्थानान्युलङ्घ्याधस्तनासु स्थितिषु निक्षिपति जघन्यकण्डकं तु समयादिहान्या क्षीयमाणं क्षीयमाणं पल्योपमासंख्येयभागमात्रं कण्डकं भवति । व्याघाते इयं जघन्याऽतीत्थापना, तामुलङ्घ्य स्थितिघातकाले स्थितिदलं निक्षिपति । अत्र स्थापना—

॥ व्याघातभाव्यपवर्त्तनाचित्रम् ॥

अपवर्त्यमाना स्थितयः

जघन्यनिक्षेपः कण्डकप्रथमस्थितिमाश्रित्य

अतीत्थापना पल्योपमासं० अपवर्त्यमानकण्डकस्य प्रथमस्थितिमाश्रित्य

उत्कृष्टनिक्षेपः कण्डकसर्वान्तिमस्थितिमाश्रित्य

प्रथमान्तिमस्थितिवदपवर्त्यमाना कण्डकमध्यमस्थितयः

स्थितिघातेनापवर्त्यमानं जघन्यमुत्कृष्टं वा कण्डकम्

● अपवर्त्यमानासु प्रथमा

○ ,, सर्वान्तिमा

अत्राल्पबहुत्वमुच्यते—अपवर्त्तनायां सर्वस्तोको जघन्यो निक्षेपः, समयाधिकावलिकात्रिभागमात्रत्वात् । ततोऽपि जघन्याऽतीत्थापना त्रिसमयोना द्विगुणा । ननु त्रिसमयोनं द्विगुणत्वं कथं भवतीति चेत्? उच्यते, व्याघातमन्तरेण जघन्यातीत्थापना आवलिकात्रिभागद्वयं समयोनं भवति, आवलिकाऽसत्कल्पनया नवसमयात्मिका कल्प्यते, समयोनं त्रिभागद्वयं पञ्चसमयप्रमाणमवगन्तव्यम्, निक्षेपोऽपि जघन्यः समयाधिकावलिकात्रिभागप्रमाणोऽनयाऽसत्कल्पनया चतुःसमयप्रमाणो द्विगुणीकृतः त्रिसमयोनः सन् एतावानेव भवतीति । ततोऽपि व्याघातं विनोत्कृष्टातीत्थापना विशेषाधिका तस्याः परिपूर्णावलिकामात्रत्वात् । ततोऽपि व्याघाते उत्कृष्टाऽतीत्थापनाऽसंख्येयगुणा, तस्याः किञ्चिदूनडायस्थितिप्रमाणत्वात् । ततोऽप्युत्कृष्टो निक्षेपो विशेषाधिकः, तस्य समयाधिकावलिकाद्विकोनसकलकर्मस्थितिप्रमाणत्वात् । ततः सर्वा कर्मस्थितिः विशेषाधिका ।

अथोद्वर्त्तनापवर्त्तनयोः संयोगेनाल्पबहुत्वमुच्यते—तत्रोद्वर्तनायां व्याघाते जघन्यातीत्थापनानिक्षेपौ सर्वस्तोकौ स्वस्थाने परस्परं तुल्यौ आवलिकाया असंख्येयभागमात्रत्वात् ।

नमाश्रित्योत्कृष्टनिक्षेप उक्त । उदयावलिकाया उपरितनं समयमात्रं स्थितिस्थानमपवर्त्यमान माश्रित्य जघन्यनिक्षेपः । तदुक्त पञ्चसंग्रहे–"उदयावलिउवरित्थ ठाण अहिकिच होइ अइहीणो । निरुखेवो सव्वोवरिठिइठाणवसा भवे परमो॥१॥" इति । एष निर्व्याघातेऽपवर्तनाविधि । यन्त्रकम्–

॥ निर्व्याघातापवर्त्तनायाश्चित्रम् ॥

स्थितिरत्र एकसमयेनोऽभिमुखासु स्थितिषु संक्रमति

बन्धावलिका अनपवर्तनीया | त्रिभाग | त्रिभाग | त्रिभाग

ज० निक्षेप समयाधिक त्रिभाग | ज० अतीत्थापना समयोनत्रिभाग द्वयम्

उदयावलिका ( अनपवर्तनीया ) अत्र धू समयकेनावलिका

आवलिकातीत्थापनभाव वर्तमाना स्थितय

अपवर्तनीया [ अपवर्त्यमाना ] स्थितयः

● इति धनशून्यमावलिकातीत्थापनाप्रारम्भदर्शकम्

○ इति धनपरिमाणशून्य निक्षेपप्रारम्भसूचकम्

अथ व्याघातभाविन्यपवर्त्तनोच्यते–व्याघातो नाम स्थितिघात , तदुक्त पञ्चसंग्रहे–"ठिइघाओ एत्थ होइ वाघाओ", तस्मिन् क्रियमाणे सति समयोन कण्डकमात्रमुत्कृष्टातीत्थापना । ननु कथ समयोन कण्डकमुत्कृष्टातीत्थापनेति चेत् ? उच्यते–सर्वोपरितनेन समयमात्रेण स्थितिस्थानेनापवर्त्यमानेन सहाधस्तात् कण्डकमतिक्रम्यते, ततस्तेन विना समयोन कण्डक भवति । तच्च कण्डक द्विविधम् , जघन्यमुत्कृष्टं च । तत्र किञ्चिदूनडायस्थितिप्रमाणमुत्कृष्ट कण्डक भवति । तदुक्त कर्मप्रकृतौ–"डायठिइ किंचूणा ठिइ कंडुक्कोसगपमाण" इति । ननु का डायस्थितिरिति चेत् ? उच्यते–यस्या स्थितेरारभ्य तस्या एव प्रकृतेरुत्कृष्टस्थितिबन्ध उत्प्लुत्य विधीयते तत प्रभृति सर्वापि स्थितिः डायस्थितिरिति । सा च किञ्चिदूना स्थिति कण्डकस्योत्कृष्ट प्रमाण भवति । पञ्चसंग्रहे तु–"उक्कोस डायठिई किंचूणा कंडग" मूलवृत्ति –"यतो यस्या स्थितेरारभ्योत्कृष्ट स्थितिबन्ध विधत्ते निर्मापयति तस्या आरभ्योपरितनानि सर्वाण्यपि स्थितिस्थानानि डायस्थितिसंज्ञानि भवन्ति । सा चोत्कृष्टत किञ्चिदून कर्मस्थितिप्रमाणा भवति, सा चोत्कृष्ट कण्डकमुच्यते" इति । इयमेवोत्कृष्टातीत्थापना, तत उपरि-

नस्थितिस्थानसत्कं दलमियन्ति स्थितिस्थानान्युल्लङ्घ्याधस्तनासु स्थितिषु घन्यकण्डक तु समयादिहान्या क्षीयमाण क्षीयमाणं पल्योपमासख्येयभागमात्रं कण्डकं भवति । व्याघाते इयं जघन्याऽतीत्थापना, तामुल्लङ्घ्य स्थितिघातकाले स्थितिदलं निक्षिपति । अत्र स्थापना—

॥ व्याघातभाव्यपवर्त्तनाचित्रम् ॥




अत्राल्पबहुत्वमुच्यते–अपवर्त्तनाया सर्वस्तोको जघन्यो निक्षेपः, ... त्रिभागमात्रत्वात् । ततोऽपि जघन्याऽतीत्थापना निसमयोना द्विगुणा । ननु द्विगुणत्वं कथ भवतीति चेत् ? उच्यते, व्याघातमन्तरेण जघन्यातीत्थापना त्रिभागद्वय समयोनं भवति, आवलिकाऽसत्कल्पनया नवसमयात्मिका कल्प्यते, त्रिभागद्वय पञ्चसमयप्रमाणमवगन्तव्यम्, निक्षेपोऽपि जघन्यः ... गप्रमाणोऽनयाऽसत्कल्पनया चतु समयप्रमाणो द्विगुणीकृत त्रिसमयोन सन् नैव भवतीति । ततोऽपि व्याघातं विनोत्कृष्टातीत्थापना विशेषाधिका तस्याः परिपू... लिकामात्रत्वात् । ततोऽपि व्याघाते उत्कृष्टाऽतीत्थापनाऽसख्येयगुणा, तस्या ... यस्थितिप्रमाणत्वात् । ततोऽप्युत्कृष्टो निक्षेपो विशेषाधिक , तस्य ... कोनसकलकर्मस्थितिप्रमाणत्वात् । तत सर्वा कर्मस्थिति॰ विशेषाधिका ।

अथोद्वर्त्तनापवर्त्तनयोः सयोगेनाल्पबहुत्वमुच्यते–तत्रोद्वर्तनाया व्याघाते स्थापनानिक्षेपौ सर्वस्तोकौ स्वस्थाने परस्पर तुल्यौ आवलिकाया असख्येयभागमात्रत्वात्

ा जघन्यो निक्षेपोऽसख्येयगुण', तस्य समयाधिकावलिकाया' त्रिभागमात्र-
ापवर्तनायामेव जघन्याऽतीत्थापना त्रिसमयोना द्विगुणा, भावना प्राक्तन।
यामेव व्याघाताभावभाविन्युत्कृष्टाऽतीत्थापना विशेषाधिका, तस्या परि
त्वात् । तत्त उद्वर्तनायामुत्कृष्टाऽतीत्थापना सख्येयगुणा, तस्या उत्कृष्टा
ततो व्याघातेऽपवर्तनायामुत्कृष्टाऽतीत्थापनाऽसख्येयगुणा, तस्या किञ्चि
माणत्वात् । तत उद्वर्तनायामुत्कृष्टो निक्षेपो विशेषाधिक , ततोऽप्यपवर्तना
पो विशेषाधिक । ततोऽपि सर्वा स्थितिर्विशेषाधिका । उक्ता स्थित्यपवर्तना ॥
द्वर्तना लिख्यते—चरम स्पर्द्धक नोद्वर्त्यते, नापि द्विचरमादीनि यावच्चरमात्
न्तानि स्पर्द्धकानि, इदमुक्त भवति—य आवलिकाया असख्येयभाग सर्वो
ा निक्षेप या च तस्याध आवलिकामात्राऽतीत्थापना तद्विस्थितिस्थानगतानि
ानि नोद्वर्त्यन्ते किन्तु तेभ्योऽधस्तादवतीर्य यानि स्पर्द्धकानि समयमात्र
ऽभ्यन्ते तान्युद्वर्तयति । तानि चोद्वर्त्यावलिकामात्रस्थितिगतान्यनन्तानि
न्योपरितनेष्वेवावलिकासत्कासख्येयभागमात्रगतेषु स्पर्द्धकेषु निक्षिपति,
यदा द्वितीयसमयमात्रस्थितिगतानि स्पर्द्धकान्युद्वर्तयति तदाऽऽवलिकामा
स्पर्द्धकान्यतिक्रम्योपरितनेषु समयाधिकावलिकासत्कासख्येयभागमात्रगतेषु
ाति । एव यथा यथाऽधोऽवतरति तथा तथा निक्षेपो वर्धते, अतीत्थापना
ऽकामात्रस्थितिगतानि स्पर्द्धकानि भवन्ति । कियान् पुनरुत्कृष्टो निक्षेपवि
उच्यते—बन्धावलिकायामतीतायां समयाधिकावलिकामात्रगतानि स्पर्द्ध
नि च व्यतिरिच्य शेषाणि सर्वाण्यपि निक्षेपविषयः, तथा हि—अबाधागतानि
र्त्यन्ते, उद्वर्त्यमानानि समयमात्रस्थितिगतानि स्पर्द्धकानि न तत्रैव निक्षिपति,
गतानि त्वतीत्थापना, ततो बन्धावलिकायामतीतायां समयाधिकावलिका
तिरिच्य शेषाणि स्पर्द्धकान्युत्कृष्टनिक्षेपविषय । अत्राल्पबहुत्वमुच्यते—सर्व
निक्षेप , तस्यावलिकाऽसख्येयभागगतस्पर्द्धकप्रमाणत्वात् । ततोऽतीत्था
ा, तेभ्य आवलिकामात्रस्थितिगताना स्पर्द्धकानामनन्तगुणत्वात् । तत
ऽनन्तगुण , ततोऽपि सर्वोऽनुभागो विशेषाधिक , इत्युक्ताऽनुभागोद्वर्त्तना ॥
पवर्त्तनोच्यते—सा चोदयसमयादारभ्य स्थित्यपवर्त्तनावज्ज्ञेया । तद्यथा—प्रथम
र्यते, नापि द्वितीय, नापि तृतीयमेव तावद्वक्तव्य यावदुदयावलिकास्थिति
ान्यनपवर्तनीयानि भवन्ति । तेभ्य उपरितनानि तु स्पर्द्धकान्यपवर्त्यन्ते, तत्र
ाया उपरि समयमात्रस्थितिगतानि स्पर्द्धकान्यपवर्त्तयति तदा समयोनावलि
ातानि स्पर्द्धकान्यतिक्रम्याधस्तनेष्वावलिकासत्कसमयाधिकावलिकात्रिभागग-
निक्षिपति । यदा तूदयावलिकाया उपरि द्वितीयसमयमात्रस्थितिगतानि स्पर्द्ध-
तदा प्रागुक्तातीत्थापना [illegible]

पस्तु तावानेव। एवं समयवृद्ध्याऽतीत्थापना तावद्वर्धनीया यावदावलिका परिपूर्णा भवति। ततः परमतीत्थापना सर्वत्रापि तावन्मात्रैव, निक्षेपस्तु वर्धते। एवं निर्व्याघाते द्रष्टव्यम्। व्याघाते त्वनुभागकण्डकं समयमात्रस्थितिगतस्पर्द्धकन्यूनमतीत्थापना द्रष्टव्या।

अत्राल्पबहुत्वम्—सर्वस्तोको जघन्यो निक्षेपः, ततो जघन्याऽतीत्थापना अनन्तगुणा, ततो व्याघातेऽतीत्थापना अनन्तगुणा, ततोऽप्युत्कृष्टमनुभागकण्डकं विशेषाधिकं, समयगतैः स्पर्द्धकैरतीत्थापनातोऽधिकत्वात्, तत उत्कृष्टो निक्षेपो विशेषाधिकः, ततोऽपि सर्वोऽनुभागो विशेषाधिकः।

एकस्या स्थितौ यानि अनुभागस्पर्द्धकानि तानि क्रमेण स्थाप्यन्ते, तद्यथा—सर्वजघन्यमनुभागस्पर्द्धकमादौ ततो विशेषाधिकरसं द्वितीयं ततोऽपि विशेषाधिकरसं तृतीयमेवं सर्वोत्कृष्टं रसमन्ते। प्रथमस्पर्द्धकादारभ्योत्तरोत्तररसस्पर्द्धकानि प्रदेशापेक्षया विशेषहीनानि विशेषहीनानि भवन्ति। अन्तिमस्पर्द्धकादारभ्य पुनः क्रमेण प्रदेशापेक्षया विशेषाधिकानि विशेषाधिकानि भवन्ति। एतेषां मध्ये एकस्मिन् द्विगुणवृद्ध्यन्तरे द्विगुणहान्यन्तरे वा यद्रसस्पर्द्धकपटलं तत्सर्वस्तोकम्, यद्वा बन्धनकरणोक्तस्नेहप्रत्ययस्पर्द्धकस्यानुभागद्विगुणवृद्ध्यन्तरेऽनुभागद्विगुणहान्यन्तरे वा यदनुभागकदम्बकं तत्सर्वस्तोकम्, तत उद्वर्तनापवर्तनयोर्जघन्यो निक्षेपोऽनन्तगुणः स्वस्थाने परस्परतुल्यः, ननूद्वर्तनाया जघन्यनिक्षेपे आवलिकाऽसङ्ख्येयभागप्रमाणस्थितिकान्यनुभागस्पर्द्धकानि, अपवर्तनायां तु समयाधिकावलिकात्रिभागगतान्यनुभागस्पर्द्धकानि भवन्तीति कथं स्वस्थाने परस्परं तुल्य इति चेत् ? अत्रोच्यते—प्रथमस्थितिषु स्तोकान्येव स्पर्द्धकानि प्राप्यन्ते, अन्तिमस्थितिषु प्रभूतानि स्पर्द्धकानि भवन्तीति तौल्यं न विरुध्यते। एवमग्रेऽपि कारणं द्रष्टव्यम्। ततो द्वयोरपि निर्व्याघातभाविन्यबाधा अनन्तगुणा, स्वस्थाने परस्परं द्वे अपि तुल्ये, न्यूनाधिकत्वेऽपि तुल्यत्वकारणं प्रागुक्तमेव द्रष्टव्यम्, ततः व्याघातभाविन्यामपवर्तनायामुत्कृष्टातीत्थापनात्वेनोपजायमानं समयन्यूनकण्डकसत्करसस्पर्द्धकपटलमनन्तगुणम्, तत उद्वर्तनापवर्तनयोरुत्कृष्टनिक्षेपो विशेषाधिकः, स्वस्थाने तु द्वावप्युत्कृष्टनिक्षेपौ परस्परं तुल्यौ, ततः पूर्वबद्धोत्कृष्टस्थित्यनुभागसत्कर्मयुतोत्कृष्टानुभागबन्धो विशेषाधिकः, समयाधिकातीत्थापनावलिकागतैः पूर्वबद्धैर्बध्यमानैश्च स्पर्द्धकैरधिकत्वात्।

उद्वर्त्तना बन्धे सत्येव भवति, अपवर्त्तना तु बन्धेऽबन्धे वा भवति। एष कालनियमः। यद्वा यावन्मात्रः स्थितिबन्धः तावन्मात्रस्य च स्थितिसत्कर्मणः स्थित्यनुभागयोरुद्वर्त्तना प्रवर्त्तते, उपरितनस्य तु सत्कर्मणः स्थित्यनुभागोद्वर्त्तना न भवति। अपवर्त्तना तु सर्वत्र प्रवर्त्तते। किट्टीकृते त्वपवर्त्तनैवैका प्रवर्त्तते। किट्टीकृतवर्जे तूभयं प्रवर्त्तते। एष सर्वोऽपि विषयनियमः। तदेवमुक्ते उद्वर्त्तनापवर्त्तने॥

॥ समाप्तोऽयं सोद्वर्त्तनापवर्त्तनः सङ्क्रमकरणप्ररूपको ग्रन्थः॥

## ॥ अथ प्रशस्तिः ॥

( स्रग्धरा )

प्रेमापाराम्बुराशेः स्मरजलधिशुचेः कोपयादःप्रवृत्ते-
मायावर्त्तप्रचण्डाद्विकृतिखरसरित्सङ्गमान्मानवातात् ।
दूरेत्यो द्वेषवीचेः पृथुभवजलधेर्लोभपाषाणपूर्णात्,
दद्यात्सिद्धिं वृषाङ्को जिनवृषवृषभः सम्यगक्षिप्रसाध्याम् ॥ १ ॥

( शिखरिणी )

जगत्पुण्यद्बाह्यान्तररिपुकुलारण्यदहनो
वरेण्यार्हच्चक्रिप्रवरपदसङ्केतसदनः ।
स्वकायार्चिःस्तोमापहसितसमुत्तप्तकनकः,
स शान्तिर्मे शान्त्यै स्फुरतु सततं स्वान्तसदने ॥ २ ॥

( मालिनी )

नतिततिपरकंसारातिसच्चारुचूडा-
मणिरुचिरमरीचिस्तोमरक्ताङ्घ्रिपीठः ।
नवघनरुचिनेमिर्भक्तिनेमिस्त्रिलोको
दिशतु मधुपभावं मा स्वपादारविन्दे ॥ ३ ॥

( पृथ्वी )

मरुद्घटसुरद्रुमत्रिदशधेनुचिन्तामणि-
प्रभावपरजित्वरक्रमसरोजसेवाफलः ।
कुपूयकमठस्मयक्षितिधरेन्द्रसारस्वरुः,
पिपर्तु भवतां विभुः स रुचितानि पार्श्वप्रभुः ॥ ४ ॥

( स्रग्धरा )

त्रैलोक्याजेयमोहावनिपतिपरमोद्यद्यशोरोहिणीश-
ग्रासस्वाश्चित्रभानुर्भवगहनवने कर्मवल्लीं सुसार्य ।
कायव्योमस्थलोलेन्द्रियविहगगणानन्यपाशप्रभः स
पारं संसारवासाद्वितरतु वितताद्वर्धमानो जिनेन्द्रः ॥ ५ ॥

( मन्दाक्रान्ता )

श्रीमन्तस्ते गणधरवरा गौतमादिप्रमुख्या
यस्मात्तीर्थं प्रसृतिमगमन्नाथनाथः सुधर्मा ।

तस्मात्कम्बश्वरमशिवग' स्वामिजम्बूप्रवर्हो
धौरेयाग्र्या' प्रभवविभवः पूज्यशय्यंभवाद्या• ॥ ६ ॥
विख्यातास्ते हरिनतपदाः श्रीयशोभद्रसेव्याः
श्रीमत्सभूतिविजयवरा नायको भद्रबाहु ।
सद्ब्रह्माद्यापदकपट्टपत्स्थूलभद्रप्रमुखै',
मर्नै स्युर्मे मुदितमनस• श्रीसुहस्तिसरूपा' ॥ ७ ॥ युग्मम् ।

( शिखरिणी )

करोमीदं सर्वं जिनपसमयं सस्कृतगिरि,
गृहीत्वेत्थभावाद्रुचिरहृदि पाराचिकमिदम् ।
पर प्रायश्चित्त वरसरलतापाठददतो
दिवाकृद्देवा नो ददतु कुशलं दुश्चरन्चरम् ॥ ८ ॥

( मालिनी )

नृपसुपमसभाया मातृमोहं विहाय,
हृदि सुभरितभक्त्या धर्मकेतुं गृहीत्वा ।
नभसि जिनवराज्ञावैजयन्तीविनेतु-
र्जयतु जगति वज्रस्वामिनो कीर्तिमूर्तिः ॥ ९ ॥

( इन्द्रवज्रा )

सद्भंसदोहकिरीटकल्पः कर्मप्रवोधार्णवकेन्द्रतुल्य• ।
नैपुण्यनिष्कर्षनितान्तकारी गुम्फो नु कर्मप्रकृति' सुनाम्ना ॥ १० ॥
योऽग्रायणीयाभिधपूर्वमध्यादुद्धृत्य किञ्चिद्रचयाचकार ।
ससारजन्तूपकृतिप्रसक्त पायात्स पाताच्छिवशर्मसूरि ॥११॥ युग्मम् ।

( शार्दूल० )

साहित्यार्णवकर्णधारकुशला निर्वेदलीलाजुषो
नि श्रेयोनियमप्रकाशपदवीसद्वर्त्मनिर्दर्शका ।
श्रीपञ्चाननन्नादसन्निभगिर कर्मेभविन्नासने
व श्रीचन्द्रमहत्तरर्षिपतयो यच्छन्तु शश्वच्छ्रियम् ॥ १२ ॥

( हरिणी )

युगगणिवर' श्रीदेवर्द्धिक्षमाश्रमण स्मृति-
पथवहिरयन्दृष्ट्वा सार्वागम वलभीपुरे ।
अमुमुदधरग्रन्थारूढ विधाय कृपादृशा,
स भवतु विभु' शश्वद्भूत्यै मुमुक्षुगवाभरै• ॥ १३ ॥

( शिखरिणी )

न चार्वाकः सद्वाक् न तु कणभुजो बुद्धिबलिनो
न कानीनः काम्यो न कविसुमतं जैमिनिमतम् ।
न सांख्यः संख्यार्हो नयनरुचिरो नाक्षिचरणः,
समिद्धे सत्तर्कैर्लसति हरिभद्रस्य समये ॥ १४ ॥

( अनुष्टुप् )

विश्वे सार्धत्रयकोटी ग्रन्थसंचयनिर्मिते ।
सर्वसाहित्यसर्वापी शिलोच्चयेशसंनिभाः ॥ १५ ॥
निर्वृतिनगरीपान्थान्, नयन्तु नेयपद्धतिम् ।
ते कलिकालसर्वज्ञाः, श्रीहेमचन्द्रसूरयः ॥ १६ ॥ युग्मम् ।

( वसन्ततिलका )

निर्जित्य सच्चतुरशीतिविवादिवृन्द-
मभ्यागतः कुमुदचन्द्रदिगम्बरेन्द्रः ।
श्रीसिद्धभूमिपतिसंसदि पत्तनेऽस्मिन्
येनार्दितोऽवतु स वादिपदेवसूरिः ॥ १७ ॥

( इन्द्रवंशा )

सन्स्वान्तदुर्गम्यतपोऽरुणातपाद्दूरीकृतानेकतमोऽन्धकारकः ।
श्रीमत्तपोगच्छपरागपुष्करो च श्रीजगच्चन्द्रविभुः स बोधये ॥ १८ ॥

( वंशस्थ )

मनोरमानेकसुगुम्फनिर्मितिनिर्वर्हिताजावरसृष्टिदक्षतः ।
वहन् सहस्राभिनवाभिधानभा पुनातु सूरिर्मुनिसुन्दरार्यमा ॥ १९ ॥

( शार्दूल० )

तस्मात्पट्टपरम्परापरिगतश्रीदानसूरिप्रभोः,
पट्टाम्भोरुहराजहंससदृशाः श्रीहीरसूरीश्वराः ।
नानासद्गुणराजिभूपितपुरः सत्कीर्तिविख्यातिगा
राजन्ते सविता यथा सुरपथेऽर्हच्छासनाभ्राश्रये ॥ २० ॥
म्लेच्छो यैर्विहितो नृपोऽप्यकवरोऽनार्यालयालङ्कृतिः,
शुद्धस्वान्तकृतानुकार्यनियमोऽहिंसापराकृष्टहृद् ।
सीमानन्त्वरमञ्जरीहतपसा तेजस्विकायश्रिता,
कल्याणं कलयन्तु न कुशलये कारुण्यकर्मालया ॥२१॥ युग्मम् ।

( सुवदना )

वाराणस्यां विवादे बुधजनसमितौ तैलङ्गिविदुषः,
सम्प्राप्ता न्यायवैशारदपदममलं निर्जित्य नितराम् ।
न्यायाचार्यत्वमाप्ताः शतवररचनानिर्माणसमये,
जीयासुस्ते यशोयुग्विजयमुनिवराः श्रीवाचकनृपाः ॥ २२ ॥

( शार्दूल० )

इत्येवं जिनशासनाम्बरवरे सिद्धान्तसाराशया
वैयावृत्यकराश्च केचन पुनर्वादाहवे जित्वराः ।
केचित्ते विनयान्विता गुरुपदे सवेगरगाञ्चिता
वैराग्यामृतपानपीनहृदया ग्रन्थाम्बुधाराधराः ॥ २३ ॥
केचिद्ध्यानधराग्रिमा वरतपोनिष्ठाश्च केचित्पुन-
र्येऽन्ये शान्तिसरस्स्थिताः समुदियुर्वन्द्याभिवन्द्या मुदा ।
यन्नामस्मरणेन पापनिकरा गच्छन्ति दूरे सदा,
ते सर्वेऽपि भवन्तु नः शिवकरा भद्रकराः सर्वदा ॥ २४ ॥

( शोभा )

ततो भूयो भूस्पृग्गतपदविजयानन्दसूरीशितारोऽ-
भवन्पृथ्वीपीठे शशिकरयशसः कोविदौघाग्रगण्याः ।
लसद्भाग्योद्भूताः प्रशमपरिमलाः सच्चरण्याः परार्ध्याः,
भवैनोजम्बाले प्रखररविरुचः पुण्यपाथःपयोदाः ॥ २५ ॥
सुनीतो येनानार्यजनजनपदे जैनपञ्चास्यनादो
यदीयः शिष्यौघो विशसति जडवादक्ष्माजं समूलम् ।
यशोमूर्तिर्यस्याद्य विकटसमये व्याप्यवृत्तिर्दिगन्तं
पुनातूर्वीभालः विकचसदलिको मान्यमूर्धन्यसूरिः ॥ २६ ॥

( पृथ्वी )

तदीयगतपट्टपूर्वगिरिसान्वनन्यार्यमा,
बभूव विजयाग्रिमः स कमलाह्वसूरीशिता ।
यदीयमुखतेजसा खलु विहाय पृथ्वीं हरि-
र्नभोनिलयमिष्टदं वसति तत्र मत्वैव किम् ॥ २७ ॥
स वीरविभुशासनोन्मिषितनीलक्षेत्रे वरे,
पतत्करकनिह्नवानवितृवेपभृन्नक्षकान् ।

प्रदापयति यस्य दिक्षु शरणं प्रतापातपः,
श्रियेऽस्तु मम सर्वदा कमलसूरितिग्मत्विषः ॥ २८ ॥

( मन्दाक्रान्ता )

सत्साम्राज्ये विजयकमलाचार्यभूपालभर्तु
रेजुस्तेऽमी विजयचरमाः पाठकश्रेष्ठवीराः ।
येषां घारप्रखररुचिरप्रौढमूर्तेः समीपे,
घूकायन्ते सुहृदरिपवः काममुत्सूत्रवाचः ॥ २९ ॥

( हरिणी )

धरणिविसृतां दृष्ट्वा कीर्तिं नु यस्य परां सिताम्,
प्रवररुचिरा चन्द्रज्योत्स्ना शुचा धवलायिता ।
अपि सुधवलं भास्वत्तेजो रुषा समभृत्त्वरम्,
शुचिशुचिशुचिस्तिग्मस्पर्शः पिशङ्ग घताऽभवत् ॥ ३० ॥

( प्रभा )

विजयकमलसूरिसुत्रामपट्टाब्धिजैवातृका
विजयचरमवाचकादित्यवीरक्रमाब्जालिनः ।
जिनसमयविदाल्या वर्तमाना गणस्वामिनः,
श्रुतिमतिशमदमप्रभास्मारितानेकपूर्वर्षयः ॥ ३१ ॥
विशसितमदने शमस्फाटिके यन्मनोमन्दिरे,
श्रुतनिनयदशेन्धने सारसद्भावदौवारिके ।
खलु परिवरितो निरातङ्कनिर्दोषक्रीडा क्षमा-
दिदशदयितया स सद्धर्मभूपः सदा कुर्वते ॥ ३२ ॥
उपकृतिगुणगा नु वुद्ध्वा तपो दुश्चरं तेपिरे,
प्रतिसमयसुभङ्गुरा धार्धके ये तनु सन्ततम् ।
प्रवचनपरमोद्यतावर्पितानन्तरायुः श्रियो
ददतु विजयदानसूरीश्वरास्तेऽव्ययार्चि श्रियम् ॥ ३३ ॥ विशेषकम् ।

( शार्दू० )

साम्राज्ये रमणीयभावरुचिरे श्रीदानसूरिप्रभो-
रम्भेभप्रद्यचन्द्रसयति वरे सेव्याग्रसेवावशात् ।
तेषां पद्मरपङ्करुणमधुलिहा प्रेमाभिधेनार्पिणा
याग्मार्गे विजयान्तिमेन निदधे श्रीसक्रमग्रन्थनम् ॥ ३४ ॥

संसारदुःखदववह्निकठोरताप–दन्दह्यमानभवजन्तुमनोधरित्र्याम् ।
वैराग्यवारिरसगमशब्दजात–पानीयधारजलदागममेघवक्त्रैः ॥ ३५ ॥
पूज्यमनेकविजयाग्रिममेघसूरि–सुत्रामभि प्रकृतग्रन्थविशोधनादौ ।
सपीडितैरपि निरन्तरमौलिदुःखात्, साहाय्यमत्र करुणैकरसैर्व्यधायि॥३६॥युग्मम्।

( वसन्त० )

तादृग्विशोधकवर रचना विनेयं प्राकाश्यपद्धतिपरा न बभूव नूनम् ।
कर्मापरप्रकृतिसर्वककर्मग्रन्थ–पञ्चाग्रसग्रहवरादिककर्मगुम्फान् ॥ ३७ ॥
तस्मात्यपाठ निकटे मम मे विनेयो जम्बूत्तरत्यविजयोः द्विविभागभाज. ।
अस्याः प्रसिद्धिजनकं विशद च कार्ये सशोधनादिसकल निरतो व्यधत्त ॥३८॥ युग्मम्।

( प्रहर्षिणी )

धीमान्द्यप्रभृतिबहुप्रदोपजाला-
दत्रोत्सूत्रमदवतरेच्च यद्धि किञ्चित् ।
मिथ्यादुष्कृततरमस्तु मे सदा तच्-
छोध्य च प्रकृतिवरैः कृपा विधाय ॥ ३९ ॥

( शार्दूल० )

सत्यासत्यहुपोपरोधजनकं काम्या गुणानां खनिं
श्रेयोऽनन्यनिदानशान्तिधरणि सन्मंगले मगलम् ।
देवादेवनरेन्द्रसेवितवर भव्यात्मभद्रङ्कर
श्रेष्ठश्रीजिनशासन जयकर भावान्नमामो वयम् ॥ ४० ॥

( शार्दूल० )

जम्बूद्वीपजलेरुहे सुरगिरि सत्कर्णिकालङ्कृतिम्,
यावत्सूर्यनिशाकरौ सुरपथाधन्यत्वमाबिभ्रत ।
यावन्नीरनिधिर्दधाति रसनाभूषा धरित्रीकटौ,
तावन्नन्दतु जैनशासनमुवीदं सकमग्रन्थनम् ॥ ४१ ॥

॥ इति श्रीसकमकरणप्रशस्ति ॥





# निवेदन

सवत १९८७ मा श्रीसक्रमकरणनो प्रथम विभाग प्रसिद्ध कर्या पछी लगभग दोढ बे वर्षना गाळे आ द्वितीय विभाग अमो प्रसिद्ध करवाने भाग्यशाली थई शकीए छीए आटलो बधो लाबो वखत जवा माटे अमारा जीज्ञासु वाचक महाशयोनी अमारे प्रथमथी क्षमा याची लेवी जोईए साथे साथे ए पण जणावी देवु जरूरी छे के कर्मप्रकृतिमाना सक्रमकरण जेवा सूक्ष्मतर विषयने चोतरफथी बहु समर्थ रीतिए स्पर्श करता प्रस्तुत ग्रन्थरत्नना प्रकाशनमा ग्रन्थकार **परमर्षि पूज्य प्रकाण्ड शातमूर्ति सिद्धात महोदधि वाचकशीरोमणि श्रीमत् प्रेमविजयगणिप्रवरना** तथा अन्य पूज्य मुनिप्रवरोना विहारादि सयोगो जोता पण आटलो टाइम लागवो, बेशक, वधारे पडतो गणी नहि शका

आ ग्रन्थ प्रकाशनमा नीचेना श्रद्धालु धर्मप्रेमी सद्‌गृहस्थो तरफथी आर्थिक सहाय अमने मळी छे तेमनो आ स्थळे अमे आभार मानीए छीए

२०० शेठ ताराचद दलीचद पादरावाला
१०० ,, छगनलाल कस्तुरचद खभातवाला
१०० ,, नवलचद खीमचद झवेरी
१०० श्री अक्षयनिधि तपमाथी सुरत
हा झवेरी नवलचद खीमचद
३५० शेठ धारशीभाइ गणपतभाइ पोताना
स्वर्गत चि भाइ हुकमचदना पुन्यार्थे
१०१ शेठ चुनीलाल कमलशीभाइ

१०१ शेठ कस्तुरभाइ साकलचद अमदावा
दवाला
२५१ शीवगज, मारवाडना एक सद्‌गृहस्थ
२५ शाह मनसुखभाइ बापुभाइ खभात.
६० ,, चदुलाल मोतिलाल अमदाबाद
८०-४-० लालबाग, जैन उपाश्रय,
सुश्राविकाओ तरफथी
हा भूरीव्हेन मुबई

भावनगरना **शाह देवचद खीमचद,** जेमनी आ ग्रन्थो प्रकट करावबामा अमोने प्रथमथी आजर सुधी पोतानी बीमारीना समये पण खूब चीवट भरेली मुगी सेवाओ जो न मळी होत तो छपाववानु काम लगभग मुश्कील थई पडयु होत, तेमने तो भूलाय न केम ?

प्रेसना कार्यकर्ताओ के जेमणे ग्रन्थनु काम चलाववामा सारी धीरज ने सानुकूलता बतावी छे तेमने एकवार फरीथी धन्यवाद दुकाणमा तमाम शुभेच्छको अने सहायकोने पण अमारा कोटीश धन्यवाद छे

आ विभागमा एकदर २०० उपरात यन्त्रो आवेल छे तेमज अवान्तर अनेक प्रकारना विषयोनी छणावट करेली छे आ आशरे महान ग्रन्थमा ७१ उपरात आगमादिक पुस्तकोना सबधो आपवामा आवेला छे एम, घणी महेनत दोहन तथा खर्चना फळरूप आ उत्तम ग्रन्थरत्नने दरेक साहित्यप्रेमीओ अने विद्याविलासीओ सहृदयताथी अपनावो, ए अभिलाषापूर्वक अमे अत्रे विरमीए छीए

ता १४ एप्रील १९३३ मुबई

प्रकाशक श्री य मे जै सो प्रमुख
शातिदास खेतसीभाई